देपतेजागतोभागऽइतिमेसोमायब्रूताच्छन्दोनामानाᳫँसाम्राज्य
ङ्गच्छेतिमेसोमायब्रूतादास्माकोसिशुक्रस्तेग्रह्योविचितस्त्वावि
चिन्वन्तु ॥ २४ ॥ अभित्त्यम ॥ अभित्त्यन्देवᳫँसवितारम्मो
ण्ण्योः कविक्रतुमर्च्चामिसत्त्यसवᳫँरत्नधामभिप्प्रियम्मतिङ्कविम् ॥
ऊर्द्ध्वायस्यामतिर्भाऽअदिद्युतत्सवीमनिहिरण्ण्यपाणिरमिमीतसुक्र
तुः कृपास्वः ॥ प्रजाब्भ्यस्त्वाप्प्रजास्त्वानुप्प्राणन्तुप्प्रजास्त्वमनु
प्प्राणिहि ॥ २५ ॥ [ २ ] शुक्रन्त्वा । शुक्रेणक्क्रीणामिचन्द्रञ्चन्द्रेणा
मृतममृतेन ॥ सग्मेतेगोरस्मेतेचन्द्राणितपसस्तनूरसिप्प्रजाप

तेव्वर्ण्णं÷परमेणंपशुनांक्क्रीयसेसहस्रपोषम्पुषेयम् ॥ २६ ॥ मित्रो
नं÷ ॥ मित्रोनुऽएहिसुमित्रधुऽइन्द्रस्योरुमाविंशुदाक्षिणमुशन्नुशन्तᳬं
स्योनश्स्योनम् ॥ स्वानुब्भ्राजाङ्घारेबम्भारेहस्तसुहस्तकृशानवेतवं÷
सोमुक्क्रयणास्तान्त्रंक्षद्धम्मावोदभन् ॥२७॥ पारमा । ग्ग्युदुश्चरिताद्वा
धुस्वामासचरितेभज । उदायुषास्वायुषोदंस्त्थाममृतां १ऽअनु ॥
॥ २८ ॥ प्रतिपन्न्थांम् ॥ प्रतिपन्न्थांमपद्मह्हिस्वस्तिगामंनेहसंम् ॥
येनुविश्वाऽपरिद्विषोवृणक्तिविन्दतेवसु ॥ २९ ॥ [ ४ ] अदिंत्या
स्त्वक् ॥ अदिंत्यास्त्वगुस्यादिंत्यैसदऽआसींद ॥ अस्तभ्नाद्यांवृ

प्रभोऽअन्तरिक्षमम्मिमीतव्वारिमाणम्पृथिव्याः ॥ आसीदद्विश्वाभु
र्वनानिसम्म्राड्विश्वेत्तानिव्वरुणस्यव्रतानि ॥ ३० ॥ व्वनेषुवि ॥ व्वने
पुव्यन्तरिक्षन्ततानव्वाजमर्वत्सुपयऽउस्त्रियासु ॥ हृत्सुक्रतुंव्वरुणो
व्विक्ष्वग्निन्दिविसूर्य्यमदधात्सोममद्रौ ॥ ३१ ॥ सूर्य्यस्यचक्षुः॥सू
र्य्यस्यचक्षुरारोहाग्नेरक्ष्णः कनीनकम् ॥ यत्रैतशेभिरीयसेभ्राजमा
नोव्विपश्चिता ॥ ३२ ॥ उस्त्रावेतम् ॥ उस्त्रावेतन्धूर्षाहौयुज्येथामन
श्रूऽअवीरहणौब्रह्मचोदनौ ॥ स्वस्तियजमानस्यगृहान्गच्छत
म् ॥ ३३ ॥ भद्रोमे । सिप्रच्च्यवस्वभुवस्पतेव्विश्वान्यभिधाम

नि ॥ मात्त्वांपरिपुरिणौविदन्मात्त्वांपरिपुन्थिनौविदन्मात्त्वावृकाऽ
अघायवौविदन् ॥ श्येनोभूत्त्वापरांपतुयजमानस्यगृहान्गच्छुतन्नौ
सँस्कृतम् ॥ ३४ ॥ नमौमित्रस्यं ॥ नमौमित्रस्युवरुणस्युचक्षसेमुहोदे
वायुतदृतर्ठसंपर्यत ॥ दूरेदृशेदेवजातायकेतवैदिवस्पुत्रायुसूर्यांय
यशठसत ॥ ३५ ॥ वरुणस्योत्तम्भनम् ॥ वरुणस्योत्तम्भनमसिव
रुणस्यस्कम्भसर्जनीस्त्थोवरुणस्यऽऋतसदन्न्यासिवरुणस्यऽऋ
तुसदनमासिवरुणस्यऽऋतुसदनमासीद ॥ ३६ ॥ याते ॥ यातुधामानि
हुविषायजन्तितातेविश्वांपरिभूरस्तुयुज्ञम् ॥ गयुस्फानंःप्रतरणः

सुवीरोवीरहाप्प्रचरासोमुदुर्य्यान् ॥ १० ॥ ३७ ॥ [ ८ ] इतिश्रीवा
वाजसनेयसंहितायांचतुर्थोऽध्यायः ॥ ४ ॥ १० ॥ श्रीवेदपुरुषाय
नमः ॥ अनुवाकसूत्रम् ॥ अग्नेस्तनू, रापतयेचतुष्कौ, तस्मायनीद्धे;
इन्द्रघोपस्तिस्रो, युञ्जतेष्टौ, देवस्यत्वाचतस्रो, देवस्यत्वापञ्च, वि
भूरसिचतस्रो, ज्योतिरसिषड्रुराविष्णोतिस्रो, दशात्रिचत्वारिꣳश
त् ॥ हरिः ॐ अग्नेस्तनूः ॥ अग्नेस्तनूरसिविष्णवेत्त्वासोमस्यतनूर
सिविष्णवेत्त्वातिथेरातिथ्यमसिविष्णवेत्त्वाश्येनायत्त्वासोमभृतेवि
ष्णवेत्त्वाग्नयेत्त्वारायस्पोषदेविष्णवेत्त्वा ॥ १ ॥ अग्नेर्ज्जनित्रं

म् ॥ अग्नेर्ज्जनित्रमसि वृषणौस्त्थऽउर्वश्यस्यायुरसि पुरूरवाऽअसि ॥
गायत्रेणत्वाच्छन्दसामन्थामि त्रैष्टुभेनत्वाच्छन्दसामन्थामि जागतेनत्वाच्छन्दसामन्थामि ॥ २ ॥ भवतन्नः ॥ भवतन्नुःसमनसौसचेतसावरेपसौ ॥ मायज्ञꣳहिꣳसिष्ट्म्मायज्ञपतिञ्जातवेदसौशिवौभवतमद्यनः ॥ ३ ॥ अग्नावग्निः ॥ अग्नावग्निश्चरतिप्रविष्टऽऋषीणाम्पुत्रोऽअभिशस्तिपावा ॥ सनःस्योनःसुयजायजेहदेवेब्भ्योहव्यꣳसदमप्प्रयुच्छन्त्स्वाहा ॥ ४ ॥ [४] आपतयेत्वा ॥ आपतयेत्वापरिपतयेगृह्णामितनूनप्त्रेशाक्करायशक्कनऽओजिष्ठाय ॥ अना

धृष्टमस्यनाधृष्ष्यन्देवानामोजोनभिशस्त्त्यभिशास्तिपाऽअनभिश
स्त्तेन्यमञ्जसासुत्त्यमुपगेषथ्ठंस्वितेमाधाः ॥ ५ ॥ अग्ग्नेव्व्रतपाः ॥
अग्ग्नेव्व्रतपास्त्वेव्व्रतपायातवतनूरियथ्ठ सामयियोममतनू रेषासात्त्व
यि ॥ सहनौव्व्रतपतेव्व्रतान्न्यनुमेदीक्षान्दीक्षापतिर्म्मन्न्यन्तामनुतपस्त
पस्प्पतिः ॥ ६ ॥ अध्ठशुरध्ठशुष्टे । देवसोमाप्प्यायतामिन्न्द्रायैक
धनविदे ॥ आतुब्भ्यमिन्न्द्रःप्प्यायन्तामात्त्वमिन्न्द्रायप्प्यायस्व ॥ आ
प्प्याययास्म्मान्त्सखीन्त्सन्न्यामेधयास्वस्त्तितेदेवसोमसुत्त्यामं
शीय ॥ एष्टारायःप्प्रेषेभगायऽऋतमृतवादिब्भ्योनमोद्यावापृथिवी

ब्भ्यांम्॥७॥ यातें। यातेंऽअग्ग्नेयःशुयातुनूर्व्वर्षिष्ठागह्वरेष्ठा॥उग्ग्रंव्वचोऽ
अपांवधीत्त्वेषंव्वचोऽअपांवधीत्त्स्वाहा॥ यातेंऽअग्ग्नेरजःशुयातुनूर्व्वर्षि
ष्ठागह्वरेष्ठा ॥ उग्ग्रंव्वचोऽअपांवधीत्त्वेषंव्वचोऽअपांवधीत्त्स्वाहा ॥ या
तेंऽअग्ग्नेहरिशुयातुनूर्व्वर्षिष्ठागह्वरेष्ठा ॥ उग्ग्रंव्वचोअपांवधीत्त्वेषंव्वचोअ
पांवधीत्त्स्वाहा॥८॥ [४] तुप्तायंनीमेसिव्वित्तायंनीमेस्यवंतान्नमाना
थितादवंतान्माव्यथितात्॥ व्विदेदग्ग्निर्न्नभोनामाग्ग्नेऽअङ्गिरऽआयुंना
नाम्न्नेहियोस्यामृपृथिव्व्यामासियत्तेनाधृष्टन्नामयज्ञियन्तेनुत्त्वादंधे
व्विदेदग्ग्निर्न्नभोनामाग्ग्नेऽअङ्गिरऽआयुंनानाम्न्नेहियोद्वितीयंस्यामृपृ

थिव्यामसियत्तेनाधृष्टन्नामंयज्ञियन्तेनुत्त्वादधेव्विदेदग्ग्निन्नभोनामा
ग्नेऽअङ्गिरऽआयुनानाम्न्नेहियस्तृतीयस्याम्म्पृथिव्यामसियत्तेनाधृ
ष्टन्नामंयज्ञियन्तेनुत्त्वादधे ॥ अनुत्त्वादेववीतये ॥९॥ सिछंह्यसि । स
पत्क्रसाहीदेवेभ्यः कल्पस्वासिछंह्यसिसपत्क्रसाहीदेवेभ्यः शु
न्धस्स्वासिछंह्यसिसपत्क्रसाहीदेवेभ्यःशुम्भस्स्व ॥ १० ॥ [२]
इन्द्रघोषस्त्वा ॥ इन्द्रघोषस्त्वाव्वसुभिःपुरस्तात्पातुप्प्रचेतास्त्वारु
द्रैःपश्चात्पातुमनोजवास्त्वापितृभिर्दक्षिणतःपातुव्विश्वकर्म्मात्त्वा
दित्यैरुत्तरतःपात्त्विदमहन्तप्तंवार्व्बहिर्द्धायज्ञान्निःसृजामि ॥११॥ सि

ꣳह्यसि ॥ सिꣳह्यसिस्वाहासिꣳह्यस्यादित्यवनिऽस्वाहासिꣳ
ह्यसिब्रह्मवनिः क्षत्रवनिऽस्वाहासिꣳह्यसिसुप्रजावनीरायस्पो
षवनिऽस्वाहासिꣳह्यस्यावहदेवान्यजमानायस्वाहाभूतेभ्यस्त्वा
॥ १२ ॥ ध्रुवोऽसि । पृथिवीन्दृꣳहध्रुवक्षिदस्यन्तरिक्षन्दृꣳहाच्युत
क्षिदसिदिवन्दृꣳहाग्नेःपुरीषमसि ॥ १३ ॥ [ ३ ] युञ्जतेमनः ॥ यु
ञ्जतेमनऽउतयुञ्जतेधियोविप्राविप्रस्यबृहतोविपश्चितः ॥ विहोत्रा
दधेवयुनाविदेकऽइन्महीदेवस्यसवितुःपरिष्टुतिऽस्वाहा ॥ १४ ॥ इ
दंविष्णुः ॥ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम ॥ समूढमस्यपाꣳ

सुरेस्वाहा ॥ १५ ॥ इरावतीधेनुमती ॥ इरावतीधेनुमतीहिभूतᳪसूय
वसिनीमनवेदशस्या ॥ व्यस्कभ्नारोदसीविष्णवेतेदाधर्त्थपृथिवी
मभितोमयूखैःस्वाहा ॥ १६ ॥ देवश्श्रुतौदेवेषु ॥ देवश्श्रुतौदेवेष्वाघो
षतम्प्राचीप्प्रेतमध्वरङ्कल्पयन्तीऽऊर्द्ध्वंय्यज्ञन्नयतम्माजिह्वरतम् ॥
स्वङ्गोष्ठमावदतन्देवीदुर्य्येऽआयुर्म्मानिर्वादिष्टम्प्रजाम्मानिर्वादिष्ट
मत्ररमेथांवर्ष्मन्पृथिव्याः ॥ १७ ॥ विष्णोर्नु । कंवीर्य्याणि
प्प्रवोचंय्यःपार्त्थिवानिविममेरजाᳪसि ॥ योऽअस्कभायदुत्तरᳪस
धस्त्थंविचक्रमाणस्त्रेधोरुगायोविष्णवेत्वा ॥ १८ ॥ दिवोवा । वि

ष्णऽउतवापृथिव्यामुहोवाविष्णऽउरोरन्तरिक्षात् ॥ उभाहिहस्ता
वसुनापृणस्वाप्रयच्छदक्षिणादोतसव्याद्विष्णवेत्वा ॥ १९ ॥ प्रत
त् ॥ प्रतद्विष्णुस्तवतेवीर्येणमृगोनभीमःकुचरोगिरिष्ठाः ॥ यस्यो
रुषुत्रिषुविक्रमणेष्वाधिक्षियन्तिभुवनानिविश्वा ॥ २० ॥ विष्णो
रराटम् ॥ विष्णोरराटमसिविष्णोःश्नप्त्रेस्थोविष्णोःस्यूरसिवि
ष्णोर्ध्रुवोसि ॥ वैष्णवमसिविष्णवेत्वा ॥ २१ ॥ [ ८ ] देवस्यत्वा
सवितुःप्रसवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ आददेना
र्य्यसिदमहꣳरक्षसाङ्ग्रीवाऽअपिकृन्तामि ॥ बृहन्नसिबृहद्रवाबृहती

मिन्द्रांयुद्वाचंवद ॥ २२ ॥ रुक्षोहणंवलगुहनम् ॥ रुक्षोहणंवलगुहनं
वैष्णुवीमिदमुहन्तंवलगमुत्त्किरामियम्मेनिष्ट्योयमुमात्त्योनिचुखा
नेदमुहन्तंवलुगमुत्त्किरामियम्मेंसमुानोयमसंमानोनिचुखानुदमुह
न्तंवलुगमुत्त्किरामियम्मुसवंन्धुर्व्यमसंवन्धुर्न्निचुखानेदमुहन्तंवलु
गमुत्त्किरामियम्मेंसजातोयमसंजातोनिचुखानोत्त्कृत्त्याङ्किरामि ॥
॥ २३ ॥ स्वराडंसि ॥ स्वराडंसिसपत्त्नुहासंत्रुराडंस्यभिमातिहाजं
नुराडंसिरक्षोहासंवुराडंस्यामित्त्रहा ॥ २४ ॥ रुक्षोहणोवः ॥ रुक्षोह
णोवोवलगुहनःप्प्रोक्षामिवैष्णुवान्त्रंक्षोहणोवोवलगुहनोवंनयामिवै

ष्णुवान्त्रक्षोहणौवाव्वलगुहनोवंस्तृणामिवैष्णुवान्त्रक्षोहणौवाव्वलगु
ह नुाऽउपंदधामिवैष्णुवीरक्षोहणौवाव्वलगुहनौपर्य्यूहामिवैष्णुवीव्वै
ष्णुवमसिव्वैष्णुवास्त्थ ॥ २५ ॥ [ ४ ] देवस्यंत्त्वा । सवितुःप्प्र
सुवेऽश्विनोर्ब्बाहुब्भ्याम्पूष्णोहस्त्ताब्भ्याम् ॥ आददेनाय्र्यसीदमु
हर्ठरक्षंसाङ्ग्रीवाऽअपिकृन्तामि ॥ यवोसियुवयास्म्मद्द्वेषोयुवयाराती
र्द्दिवेत्त्वान्तरिक्षायत्त्वापृथिव्यैत्त्वाशुन्धन्ताँल्लोकाःपितृषदनाःपितृषद
नमसि ॥ २६ ॥ उद्दिवम् ॥ उद्दिवंᳬस्तभानान्तरिक्षम्पृणदर्ठंहस्स्व
पृथिव्यान्द्युतानस्त्त्वामारुतोमिनोतुमित्रावरुणाद्ध्रुवेणधर्म्मणा ॥

ब्रह्मवनिंत्त्वाक्षत्रवनिंरायस्पोषवनिपर्य्यूहामि ॥ ब्रह्मदृंहक्षत्र
न्दृंहायुर्दृंहप्प्रजान्दृंह॥२७॥ध्रुवासि । ध्रुवोयंयजमानोस्मिन्न
ायतनेप्प्रजयापशुभिर्भूयात् ॥ घृतेनद्यावापृथिवीपूर्य्येथामिन्द्र
स्यच्छदिरसिविश्वजनस्यच्छाया ॥ २८ ॥ परित्त्वा । गिर्वणोगि
रइमाभवन्तुविश्वतः ॥ वृद्धायुमनुवृद्धयोजुष्टाभवन्तुजुष्टयः ॥
॥ २९ ॥ इन्द्रस्यस्यूः ॥ इन्द्रस्यस्यूरसीन्द्रस्यध्रुवोसि ॥ ऐन्द्रमसिवै
श्वदेवमसि ॥ ३० ॥ [५] विभूरसि । प्प्रवाहणोवह्निरसिहव्यवाह
नः ॥ श्वात्रोसिप्रचेतास्तुथोसिविश्ववेदाउशिगसि ॥ ३१ ॥ उ

शिगांसि। कुविरङ्गांरिरसिवम्भाँरिरवुस्युरांसिदुवंस्स्वाऽन्छुन्ध्युरांसिमा
ज्जांलीयंःसुम्म्राडसिकृशानुंःपरिषद्यौंसिपवंमानोनभाँसिप्प्रुतक्कांमृ
ष्ट्रोसिहव्युसूदनऽऋुतधांमासिस्स्वर्ज्ज्योतिंऽसमुद्रोसि ॥ ३२ ॥ सुमु
द्रोसि । विश्श्वव्यंचाऽअुजोस्येकंपादहिंरसिबुद्ध्न्योवागंस्स्यैन्द्रमंसिस
दोस्स्यृतंस्स्यद्वारौमामासन्तांप्तमद्ध्वंनामद्ध्वपतुप्प्रमांतिरस्स्वुस्तिमे
स्स्मिन्पुथिदेंवुयानेंभूयात्मित्रस्यंमा ॥ ३३ ॥ मित्रस्यंमा । चक्षु
पेक्षद्ध्वमग्ग्नंयऽसगराऽसगंरास्त्थसगंरेणनाम्म्नारौद्रेणानीकेनपातमां
ग्ग्नयऽपिपृतमांग्ग्नयोगोपायतंमानमोंवोस्तुमामांहिंᳬसिष्ट ॥ ३४ ॥

[ ४ ] ज्योतिरसि । विश्वरूपंविश्वेषान्देवानांᳬसमित् ॥ त्वᳬसोमतनकृद्भ्योद्वेषोभ्योऽन्यकृतेभ्यऽउरुयन्त ॥ सिवरूथᳬस्वाहाजुषाणोऽअप्तुराज्यस्यवेतुस्वाहा ॥ ३५ ॥ शतम् ॥ २०० ॥ अग्नेनय । सुपथाराये ऽअस्मान्विश्वानिदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनमऽउक्तिंविधेम ॥ ३६ ॥ अयन्नः ॥ अयन्नोऽअग्निर्वरिवस्कृणोत्वयम्मृधःपुरएतुप्रभिन्दन् ॥ अयंवाजाञ्जयतुवाजसातावयᳬशत्रूँ१ञ्जयतुजर्हृषाणःस्वाहा ॥ ३७ ॥ उरुविष्णो ॥ उरुविष्णोविक्रमस्वोरुक्षयायनस्कृधि ॥ घृतङ्घृतयोनेपिबप्रप्रयज्ञ

पंतिन्तिरुस्वाहा ॥ ३८ ॥ देवंसवितः ॥ देवंसवितरेषतेसोमुस्तꣳरंक्ष
स्वुमात्त्वांदभन् ॥ एतत्त्वन्देंवसोमदेवोदेवाँ २ उपांगाऽइदमुहम्मंनु
ष्ष्यान्त्सुहरायस्प्पोपैंणुस्वाहानिर्व्वरुणस्युपाशांन्मुच्चये ॥ ३९ ॥ अ
ग्नेंव्रतपाः ॥ अग्नेंव्रतपास्त्वेव्रतपायातवंतुनूर्म्मय्यभूदेषासात्त्वयियो
ममंतुनूस्त्वय्यभूदियꣳसामयि ॥ यथायुथन्नोव्रतपतेव्रुतान्यनुमेंदी
क्षान्दीक्षापंतिरमुꣳस्तानुतपुस्त्तपस्प्पतिः ॥४०॥ [६] उरुव्विष्ष्णो ॥
उरुव्विष्ष्णोविक्क्रंमस्वोरुक्षयांयनस्कृधि ॥ घृतङ्घृतयोनेपिबुप्प्रप्प्रंयु
ज्ञपंतिन्तिरुस्वाहा ॥४१॥ अत्त्युन्न्यान् ॥ अत्त्युन्न्याँ २ अगान्नान्न्याँ२

उपांगामुर्व्वीकृत्काऽपरेभ्योविंदम्पुरोवरेभ्यः ॥ तन्त्वांजुषामहेदेव
व्वनस्प्पतेदेवयुज्ज्यायैदेवास्त्त्वादेवयुज्ज्यायैजुषन्तांव्विष्णवेत्त्वा ॥
ओषधेत्त्रायस्वस्वधितेमैनंᳬहिᳬसीः॥४२॥ द्याम्मा ॥ द्याम्मालेखीरु
न्तरिक्षम्माहिᳬसीःपृथिव्व्यासम्भव ॥ अयᳬहित्त्वास्वधितिस्त्तेति
जानःप्प्रणिनायमहतेसौभगाय ॥ अतस्त्वन्देवव्वनस्प्पतेशतवल्शो
विरोहसहस्त्रवल्शाव्विवयᳬरुहेम ॥ ४३ ॥ [ ३ ] १० इतिश्रीवाजसनेय
संहितायांपञ्चमोऽध्यायः ॥ ५ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्सू
त्रम् ॥ देवस्यत्वाषडुपावीरसिपञ्च माहिःषट् सन्तेतिस्त्रःसमुद्रंगच्छ

हविष्मतीर्द्धिकौहृदेत्वापञ्चदेवस्यत्वाष्टावष्टौसप्तत्रिꣳशत ॥ हरिःॐ
देवस्यंत्वा ॥ सवितुःप्प्रसवेऽश्विनोर्ब्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥
आददेनार्य्यसीदमुहꣳरक्षसाङ्ग्रीवाऽअपिकृन्तामि ॥ यवोसियु
वयास्म्मद्द्वेषोयुवयारातीर्द्दिवेत्त्वान्तरिक्षायत्त्वापृथिव्यैत्त्वाशुन्धन्ताँ
ल्लोकाःपितृषदनाःपितृषदनमसि ॥ १ ॥ अग्रेणीरसि । स्वा
वेशऽउन्नेतृणामेतस्यवित्तादधित्त्वास्थास्यतिदेवस्त्त्वासवितामद्ध्वान
क्तुसुपिप्पलाभ्यस्त्त्वौषधीभ्यः ॥ द्यामग्ग्रेणास्पृक्षऽआन्तरिक्षम्म
द्ध्येनाप्प्राःपृथिवीमुपरेणादृꣳहीः ॥२॥ यातें॥यातेधामान्युश्म्मसिग

मंद्ध्यैयत्रगावोभूरिशृङ्गाऽअयासंः ॥ अत्राहतदुरुगायस्यविष्णोंः
परमम्पदमवंभातिभूरिं ॥ ब्रह्मवनिंत्त्वाक्षत्रवनिंरायस्पोषवनिपर्य्यूं
हामि ॥ ब्रह्मंदृᳬंहक्षत्रन्दृᳬंहायुंर्दृᳬंहप्रजान्दृᳬंह॥३॥ विष्णोःकर्म्मा
णि । पश्यतयतोंव्रतानिंपस्पशे ॥ इन्द्रंस्ययुज्ज्यःसखा ॥ ४ ॥ तद्वि
ष्णोंः। परमम्पदᳬंसदांपश्श्यन्तिसूरयंः। दिवीवचक्षुरातंतम् ॥५॥ प
रिवीरंसि ॥ परिवीरंसिपरिंत्त्वादेवीर्व्विशोंव्ययन्ताम्परीमंय्यजंमानᳬं
रायोमनुष्ष्याणाम् ॥ दिवःसूनुरंस्येषतेपृथिव्यॉंल्लोकऽआंरण्ण्यस्ते
पशुः ॥ ६ ॥ [६] उपावीरसि ॥ उपावीरस्युपंदेवान्दैवीर्व्विशःप्रागुरु

शिरोवाश्हितमान्॥देवस्त्वष्टुर्वसुरमहुभ्यातैस्वदन्ताम् ॥७॥ रेवंतीरम
ध्वम्॥ रेवंतीरमध्वम्बृहस्पतेधारयावसूनि॥ ऋतस्यत्वादेवहविःपाशे
नुप्रतिमुञ्चामिधर्षामानुषः ॥८॥ देवस्यत्वा। सवितुःप्रसवेश्विनोर्बा
हुभ्याम्पूष्णोहस्ताभ्याम्॥अग्नीषोमाभ्याञ्जुष्टन्नियुनज्मि ॥ अ
भ्द्यस्त्वोषधीभ्योनुत्वामातामन्यतामनुपितानुभ्रातासगर्भ्योनु
सखासयूथ्यः ॥ अग्नीषोमाभ्यान्त्वाजुष्टम्प्रोक्षामि ॥९॥ अपाम्पे
रुः॥ अपाम्पेरुरस्यापोदेवीःस्वदन्तुस्वात्तञ्चित्सदेवहविः॥ सन्तेप्रा
णोवातेनगच्छतासमङ्गानियजत्रैः संय्यज्ञपतिराशिषा ॥ १० ॥

धृतेनाक्तौ । पुशूँस्त्रायेथाऽंरेवतिर्यजमानेप्प्रियन्धाऽआविश ॥ उरो
रुन्तरिक्षात्सुजूर्द्देवेनवातेनास्यहविषुस्त्मनायजुसमस्यतन्न्वाभव ॥
वर्षोवर्षीयसियज्ञेयज्ञपतिन्धाऽंस्वाहादेवेब्भ्योदेवेब्भ्युःस्वाहा ॥११॥
[ ५ ] माहिं ॥ माहिर्भूर्म्मापृदाकुर्न्नमस्तऽआतानानर्वाप्प्रेहि ॥ घृ
तस्यंकुल्ल्याऽउपऽऋतस्युपत्थ्याऽअनु ॥ १२ ॥ देवीरापः ॥ देवीरा
पःशुद्धावोड्ढ्ठसुपरिविष्टादेवेषुपरिविष्टाव्वयम्परिवेष्टारोभूयास्स्म ॥
॥ १३ ॥ वाचन्ते ॥ वाचन्तेशुन्धामिप्प्राणन्तेशुन्धामिचक्षुस्ते
शुन्धामिश्रोत्रन्तेशुन्धामिनाभिन्तेशुन्धामिमेढ्रन्तेशुन्धामिपायुन्ते

शिजोवाऽहितमान्॥देवंत्त्वष्टुर्व्वसुंरमहुव्व्यातैंस्वदन्ताम् ॥७॥ रेवंतीरमं
ध्वम् ॥ रेवंतीरमंद्ध्वम्बृहंस्पतेधारयावसूंनि ॥ ऋतस्यंत्त्वादेवहविंऽपाशें
नुप्प्रतिमुञ्चामिधर्षामानुषऽ ॥८॥ देवस्यंत्त्वा। सवितुःप्प्रंसवेंश्श्विनोंर्ब्बा
हुब्भ्यांम्पूष्णोहस्तांब्भ्याम्॥अग्नीषोमांब्भ्याञ्जुष्टन्नियुंनज्मि ॥ अ
ब्भ्यस्त्त्वौषंधीब्भ्योनुंत्वामातामंन्यतामनुंपितानुब्भ्रातासगब्भ्योंनु
सखासयूंत्थ्यऽ ॥ अग्नीषोमांब्भ्यान्त्वाजुष्टम्प्प्रोक्षांमि ॥९॥ अपाम्पे
रुः ॥ अपाम्पेरुरस्यापोदेवीःस्वंदन्तुस्वात्तञ्चित्तसद्देवहविः॥ सन्तेंप्प्रा
णोवातेंनगच्छतार्ठ्ठंसमङ्गांनियजंत्रैऽ संय्यज्ञपंतिराशिषां ॥ १० ॥

धृतेनाक्तौ । पशुँस्त्रायेथाᳪ्रेवतिर्यजमानेप्प्रियन्धाऽआविश ॥ उरो
रुन्तरिक्षात्सुजूर्देवेनवातेनास्यहविषस्त्मनायजसमस्यतन्वाभव ॥
वर्षोवर्षीयसियज्ञेयज्ञपतिन्धाः स्वाहादेवेब्भ्यो देवेब्भ्यः स्वाहा ॥११॥
[ ५ ] माहिः ॥ माहिर्ब्भूर्म्मापृदाकुर्न्नमस्तऽआतानानर्वाप्प्रेहि ॥ घृ
तस्यकुल्ल्याऽउपऽऋतस्यपत्थ्याऽअनु ॥ १२ ॥ देवीरापः ॥ देवीरा
पःशुद्धावोढ्ढᳪ्सुपरिविष्टादेवेषुपरिविष्टावयम्परिवेष्टारोभूयास्म ॥
॥ १३ ॥ वाचन्ते ॥ वाचन्तेशुन्धामिप्प्राणन्तेशुन्धामिचक्षुस्ते
शुन्धामिश्श्रोत्रन्तेशुन्धामिनाभिन्तेशुन्धामिमेढ्रन्तेशुन्धामिपायुन्ते

शुन्धामिचरित्राँस्तेशुन्धामि ॥ १४ ॥ मनस्ते ॥ मनस्तऽआ
प्यायतांवाक्तऽआप्यायताम्प्राणस्तऽआप्यायताञ्चक्षुस्तऽआ
प्यायताꣳश्रोत्रन्तऽआप्यायताम् ॥ यत्तेक्रूरंयदास्थितन्तत्तऽआ
प्यायतान्निष्ट्यायतान्तत्तेशुद्ध्यतुशमहोभ्यः ॥ ओषधेत्रायस्व
स्वधितेमैनꣳहिꣳसीः ॥ १५ ॥ रक्षसाम्भागः ॥ रक्षसाम्भागोसिनि
रस्तꣳरक्षऽइदमहꣳरक्षोभितिष्ठामीदमहꣳरक्षोवबाधऽइदमहꣳरक्षोध
मन्तमन्नयामि ॥ घृतेनद्यावापृथिवीप्रोर्णुवाथांवायोवेस्तोकानां
मग्निराज्यस्यवेतुस्वाहास्वाहाकृतेऽऊर्ध्वनभसम्मारुतङ्गच्छतम् ॥

॥ १६ ॥ इदमापः ॥ इदमापुःप्प्रवहतावद्यञ्चमलंञ्चयत् ॥ यच्चाभिदु
द्द्रोहानृतंयच्चशेपेऽअभीरुणम् ॥ आपोमातस्म्मादेनसःपवमान
श्चमुञ्चतु ॥ १७ ॥ [ ६ ] सन्ते ॥ सन्तेमनोमनसासम्प्राणःप्प्राणेन
गच्छताम् ॥ रेडस्यग्निष्ट्वाश्रीणात्वापस्त्वासमरिणन्वातस्यत्वा
ध्राज्ज्यैपूष्णोरंहंह्याऽऊष्मणोव्यथिषत्प्रयुतन्द्वेषः ॥ १८ ॥ घृत
घृतपावानः॥ घृतङ्घृतपावानःपिबतवसांवसापावानःपिबतान्तरिक्षस्य
हविरसिस्वाहा ॥ दिशःप्रदिशऽआदिशोविदिशऽउद्दिशोदिग्भ्यः
स्वाहा ॥ १९ ॥ ऐन्द्रःप्प्राणः ॥ ऐन्द्रःप्प्राणोऽअङ्गेऽअङ्गेनि

दीद्ध्यदैन्द्रऽउंदानोऽअङ्गऽअङ्गेनिधौतः ॥ देवंत्त्वष्टुर्भूरिंतेसꣳसंमेतु
सलंक्ष्मायद्विषुंरूपम्भवांति ॥ देवुत्रायन्तुमवंसेसखायोनुंत्त्वामाता
पितरोमदन्तु ॥ २० ॥ [ ३ ] सुमुद्रङ्गच्छ ॥ सुमुद्रङ्गच्छस्वाहा
न्तरिक्षङ्गच्छस्वाहादेवꣳसंवितारङ्गच्छस्वाहामित्रावरुणौगच्छस्वा
हाहोरात्रेगच्छस्वाहाछन्दांꣳसिगच्छस्वाहाद्यावापृथिवीगच्छस्वाहा
युज्ञङ्गच्छस्वाहासोमङ्गच्छस्वाहादिव्यन्नभोगच्छस्वाहाग्निवैश्वानुर
ङ्गच्छस्वाहामनोमेहार्दियच्छदिवन्तेधूमोगच्छतुस्वु र्ज्योतिःपृथि
वीम्भस्मनापृणस्वाहा ॥ २१ ॥ मापः ॥ मापोमौषधीर्हिꣳसी

द्धाम्म्नोधाम्म्नोराजुँस्त्ततोंव्वरुणनोमुञ्च ॥ यदाहुरुग्घ्न्याऽइतिव्वरुणे
तिशपामहेततोंव्वरुणनोमुञ्च ॥ सुमित्रियानुऽआपुऽओषधयःसन्तु
दुर्म्मित्रियास्तस्म्मैसन्तुयोस्म्मान्द्वेष्टियञ्चव्वुयन्द्विष्म्मः ॥ २२ ॥
[ २ ] हुविष्म्मंतीरिमाः ॥ हुविष्म्मंतीरिमाऽआपोहुविष्माँऽआ
विवासति ॥ हुविष्म्मान्देवोऽअंध्वुरोहुविष्म्माँ २ ऽअस्तुसूर्य्यः॥
॥ २३ ॥ अग्ग्नेर्वं ॥ अुग्ग्नेर्वोपन्नगृहस्युसदसिसादयामीन्द्राग्ग्न्यो
र्भागुधेयींस्त्थमित्रावरुणयोर्भागुधेयींस्त्थव्विश्वेषान्देवानाम्भागु
धेयींस्त्थ ॥ अमूर्य्याऽउपसूर्य्येयाभिर्व्वासूर्य्यःसुह ॥ तानोहि

न्वन्त्वद्धुरम् ॥ २४ ॥ [ २ ] हृदेत्त्वा ॥ हृदेत्वामनसेत्त्वादिवेत्त्वा सूर्य्यायत्त्वा ॥ ऊर्द्ध्वमिमन्धुरन्दिविदेवेषुहोत्राँयच्छ ॥ २५ ॥ सोमं राजन् ॥ सोमंराजन्विश्श्वास्त्त्वम्प्रजाऽउपावरोहविश्श्वास्त्वाम्प्रजाऽउपावरोहन्तु ॥ शृणोत्त्वग्निःसमिधाहवम्मेशृण्वन्त्वापोधिषणाश्चदेवीः ॥ श्रोताग्रावाणोविदुषोनयज्ञꣳशृणोतुदेवःसविताहवम्मेस्वाहा ॥ २६ ॥ देवीरापः ॥ देवीरापोऽ अपान्नपाद्योवऊर्म्मिर्हविष्यऽइन्द्रियावान्मदिन्तमः ॥ तन्देवेब्भ्योदेवत्रादत्तशुक्रपेब्भ्योयेषाम्भागस्त्थस्वाहा ॥ २७ ॥ कार्षिरसि ॥ कार्षिरसिसमुद्रस्यत्त्वा

क्षित्त्यांऽउन्नयामि ॥ सम्मापोऽअद्भिरग्मतसमोषधीभिरोषधीः ॥
॥ २८ ॥ यमग्ने ॥ यमग्नेपृत्सुमर्त्त्यमवावाजेषुयञ्जुनाः ॥ सयन्ताश
श्वतीरिषःस्वाहा ॥ २९ ॥ [ ५ ] देवस्यत्त्वा ॥ देवस्यत्त्वासवितुःप्प्र
सवेश्विनोर्बाहुभ्याम्पूष्णोहस्ताभ्याम् ॥ आददेरावासिगभीर
मिमसद्ध्वरङ्कृधीन्द्रायसुषूतमम् ॥ उत्तमेनपविनोर्ज्जस्वन्तम्मधुम
न्तम्पयस्वन्तन्निग्ग्राभ्यास्त्थदेवश्रुतस्तर्प्पयतमामनोमे ॥ ३० ॥
मनोमे । तर्प्पयतवाचम्मेतर्प्पयतप्प्राणम्मेतर्प्पयतचक्षुम्मेतर्प्पय
तश्श्रोत्रम्मेतर्प्पयतात्त्मानम्मेतर्प्पयतप्प्रजाम्मेतर्प्पयतपशून्मेतर्प्प

स्वर्स्वद्धरम् ॥ २४ ॥ [ २ ] हृदेत्त्वा ॥ हृदेत्त्वामनसेत्त्वादिवेत्त्वा
सूर्य्यायत्त्वा ॥ ऊर्द्धमिमम्मंद्धरन्दिविदेवेषुहोत्राँयच्छ ॥ २५ ॥ सोम
राजन् ॥ सोमराजन्विश्श्वास्त्त्वम्प्रजाऽउपावरोहविश्श्वास्त्त्वाम्प्र
जाऽउपावरोहन्तु ॥ शृणोत्त्वग्निःसमिधाहवम्मेशृण्वन्त्वापोधिष
णाश्चदेवीः ॥ श्रोताग्ग्रावाणोविदुषोनयज्ञꣳशृणोतुदेवःसविताहवं
म्मेस्वाहा ॥ २६ ॥ देवीरापः ॥ देवीरापोऽ अपान्नपाद्योवऊर्म्मिर्हवि
ष्य्यऽइन्द्रियावान्मदिन्तमः ॥ तन्देवेब्भ्योदेवत्रादत्तशुक्रपेब्भ्योयेषां
पाम्भागस्त्थस्वाहा ॥ २७ ॥ कार्षिरसि ॥ कार्षिरसिसमुद्रस्यत्त्वा

॥ ३५ ॥ प्रागपाक् ॥ प्रागपागुदगधराक्सर्वतस्त्वादिशऽआधावन्तु ॥ अम्बुनिष्परसमरीर्विदाम् ॥३६॥ त्वमङ्ग ॥ त्वमङ्गप्रशꣳसिषोदेवः शविष्ठमर्त्यम् ॥ नत्त्वदन्योमघवन्नस्तिमर्डितेन्द्रब्रवीमितेवचः ॥ ॥ ३७ ॥ ८ ॥ इतिश्रीवाजसनेयसंहितायांषष्ठोऽध्यायः ॥ ६ ॥

श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ वाचस्पतय उप यामगृहीतोसि त्रिकावावायोयंवा द्विकौ यस्तएका प्राणायतिस्त्रो मघवइन्द्राग्नी आगतमाधौमासश्चर्षणीधृतो विश्वेदेवासऽआगते न्द्रमरुत्वो मरुत्वन्तंवृषभं मरुतान्त्वौजसे सजोषाइन्द्रमरुत्वाँ

७

यतगुणाक्त्मैतप्पंयतगुणामुमावितृषन् ॥ ३१ ॥ इन्द्रायत्त्वा ॥ इ
न्द्रायत्त्वावसुमतेरुद्रवंतुऽइन्द्रायत्त्वादित्त्यवंतुऽइन्द्रायत्त्वाभिमाति
घ्ने ॥ श्येनायत्त्वासोमभृतेग्ग्नयेत्त्वारायस्प्पोषदे ॥ ३२ ॥ यत्ते । सो
मदिविज्ज्योतिर्य्यत्पृथिव्यांय्यदुरावन्तरिक्षे ॥ तेनास्म्मैयजमाना
योरुरायेकृद्ध्यधिदात्रेवोचः ॥ ३३ ॥ श्वात्रास्त्थ ॥ श्वात्रास्त्थवृ
त्रतुरोराधोगूर्त्ताऽअमृतस्यपत्क्नीः ॥ तादेवीर्द्देवत्रेमंय्यज्ञन्नयतोपहूताः
सोमस्यपिबत ॥ ३४ ॥ माभेः ॥ माभेम्मासंविक्क्थाऽऊर्ज्जन्धत्स्वधि
षणेवीड्वीसतीवीडयेथामूर्ज्जन्दधाथाम ॥ पाप्माहतोनसोमः ॥

॥ ३५ ॥ प्रागपाक् ॥ प्रागपागुदगधराक्सर्व्वतस्त्वादिशऽआधावन्तु ॥
अम्बनिष्पर्रसमरीविदाम् ॥ ३६ ॥ त्वमङ्ग ॥ त्वमङ्गप्रशंसिषोदेवः
शविष्ठमर्त्यम् ॥ नत्त्वदन्योमघवन्नस्तिमर्डितेन्द्रब्रवीमितेवचः ॥
॥ ३७ ॥ ८ ॥ इतिश्रीवाजसनेयसंहितायांषष्ठोऽध्यायः ॥ ६ ॥
श्रीवेदपुरुषायनमः ॥ अनुवाक्सूत्रम् ॥ वाचस्पतय उप
यामगृहीतोसि त्रिकावावायोयंवा द्विकौ यस्तएका प्राणायातिस्त्रो
मघवइन्द्राग्नी आगतमाघौमासश्चर्षणीधृतो विश्वेदेवासऽआगते
न्द्रमरुत्वो मरुत्वन्तंवृषभं मरुतान्त्वौजसे सजोषाइन्द्रमरुत्वाँ

७

२ इन्द्र महाँ २ इन्द्रो महाँ २ इन्द्र एकैकोदुत्यमष्टौ पञ्चविꣳ
शतिरष्टाचत्त्वारिꣳशत् ॥ हरिः ॐ व्वाचस्पतये ॥ व्वाचस्पतयेपव
स्वव्वृष्णोऽअꣳशुब्भ्याङ्गभस्तिपूतः ॥ देवोदेवेब्भ्यः पवस्वयेषाम्
म्भागोसि ॥ १ ॥ मधुमतीर्न्नः ॥ मधुमतीर्न्नऽइषस्कृधियत्तेसोमादा
ब्भ्यन्नामजागृवितस्मैतेसोमसोमायस्वाहास्वाहोर्व्वन्तरिक्षमन्वे
मिस्वाङ्कृतोसि ॥ २ ॥ स्वाङ्कृतोसि । व्विश्वेब्भ्यऽइन्द्रियेब्भ्यो
दिव्येब्भ्यःपार्त्थिवेब्भ्योमनस्त्वाष्टुस्वाहात्त्वासुभवसूर्य्यायदेवेब्भ्य
स्त्वामरीचिपेब्भ्योदेवाꣳशोयस्मैत्त्वेडेतत्सत्यमुपरिप्रुताभङ्गेन

हतोसौफट्प्राणायत्त्वाव्यानायत्त्वा ॥३॥ [ २ ] उपयामगृहीतोसि ॥
उपयामगृहीतोस्यन्तर्य्यच्छमघवन्पाहिसोमम् ॥ उरुष्ष्यरायऽएषो
यजस्व॥४॥ अन्तस्ते॥ अन्तस्तेद्यावापृथिवीदधाम्म्यन्तर्द्दधाम्म्युर्व्व
न्तरिक्षम् ॥ सजूर्देवेभिरवरैः परैश्चान्तर्य्यामेमघवन्मादयस्व ॥ ५ ॥
स्वाङ्कृतोसि ॥ स्वाङ्कृतोसिविश्वेब्भ्यऽइन्द्रियेब्भ्योदिव्येब्भ्यःपार्त्थि
वेब्भ्योमनस्त्वाष्टुस्वाहात्त्वासुभवसूर्य्यायदेवेब्भ्यस्त्वामरीचिपे
ब्भ्यऽउदानायत्त्वा ॥६॥ [ ३ ] आवायो ॥ आवायोभूषशुचिपाऽउप
नःसहस्रन्तेनियुतोविश्ववार ॥ उपोतेऽअन्धोमद्यमयामियस्यदेवद

धिषेपूर्वुपेयंवायवेत्त्वा ॥ ७ ॥ इन्द्रंवायूऽइमे । सुताऽउपप्रयोभिरा
गंतम् ॥ इन्दवोवामुशन्तिहि ॥ उपयामगृहीतोसिवायवऽइन्द्रवायु
भ्यान्त्वैषतेयोनिः सजोषोभ्यान्त्वा ॥८॥ [२]अयंवाम्।अयंवाम्मित्रा
वरुणासुतःसोमऽऋतावृधा ॥ ममेदिहश्रुतछहवम् ॥ उपयामगृहीतो
सिमित्रावरुणाभ्यान्त्वा ॥ ९ ॥ रायावयम् ॥ रायावयछससवाछसो
मदेमहव्येनदेवायवसेनगावः ॥ तान्धेनुम्मित्रावरुणायुवन्नोविश्वाहा
धत्तमनपस्फुरन्तीमेषतेयोनिरृतायुभ्यान्त्वा ॥ १० ॥ [२]या
वाम् ॥ यावाङ्कशामधुमत्यश्विनासूनृतावती ॥ तयायज्ञम्मिमिक्ष

तम् । उपयामगृहीतोस्यश्विभ्यान्त्वैषतेयोनिर्म्माध्वीभ्यान्त्वा ॥
॥ ११ ॥ [ १ ] तम्प्रत्नथा । पूर्वथाविश्वथेमथाज्ज्येष्ठतातिम्बर्हिष
दंस्वर्विदम् ॥ प्रतीचीनंवृजनन्दोहसेधुनिमाशुञ्जयन्तमनुयासुवर्द्ध
से ॥ उपयामगृहीतोसिशण्डायत्त्वैषतेयोनिर्व्वीरताम्पाह्यपमृष्टःशण्डो
देवास्त्वाशुक्रपाः प्रणयन्त्वनाधृष्टासि ॥ १२ ॥ सुवीरोव्वीरान् ॥ सु
वीरोव्वीरान्प्रजनयन्परीह्यभिरायस्पोषेणयजमानम् ॥ सञ्जग्मा
नोदिवापृथिव्याशुक्रः शुक्रशोचिषानिरस्तःशण्डःशुक्रस्याधिष्ठानम
सि ॥ १३ ॥ अच्छिन्नस्यते । देवसोमसुवीर्य्यस्यरायस्पोषस्य

दादितारः स्याम ॥ साप्प्रंथमासंस्कृतिर्व्विश्ववारासप्प्रंथमोव्वरुणोमित्र
त्रोऽअग्निः ॥ १४ ॥ सप्पथमः ॥ सप्प्रंथमोबृहस्प्पतिंश्चिकित्वाँस्त
स्म्माऽइन्द्रायसुतमाजुहोतुस्वाहां ॥ तृम्म्पन्तुहोत्त्रामद्ध्वोयाःस्स्विष्टा
याःसुप्प्रीताःसुहुंतायत्त्स्वाहायाडुग्नीत् ॥१५॥ [४] अयंव्वेनः ॥अयं
व्वेनश्चोदयत्त्पृश्निगर्ब्भाज्ज्योतिर्ज्जरायूरजसोव्विमाने ॥ इममपा
थ्संङ्गमेसूर्य्यस्यशिशुन्नविप्प्रामतिभीरिहन्ति ॥ उपयामगृहीतोसि
मर्क्कायत्वा ॥ १६ ॥ मनोन । येषुहवनेषुतिग्मंव्विपश्शच्छ्यांव्वनुथोद्र
वंन्ता ॥ आयःशर्य्याभिस्तुविनृम्णोऽअस्याश्श्रीणीतादिशङ्गभं

स्त्वावेषतेयोनिःप्प्रजाःपाह्यपमृष्टोमक्काँदेवास्त्वामन्थिपाः प्प्रणंयु
न्त्वनाधृष्टासि ॥ १७ ॥ सुप्प्रजाःप्प्रजाःप्प्रंजनयन्न्परीह्यभिराय
स्प्पोषेणयजंमानम् ॥ सञ्जग्मानोदिवापृथिव्यामन्न्थीमन्न्थिशोचि
षानिरस्त्तोमर्क्कोमन्न्थिनोधिष्ठानंमसि ॥ १८ ॥ [ ३ ] येदेवासऽ॥येदे
वासोदिव्येकादशस्त्थपृथिव्यामध्ध्येकादशस्त्थ ॥ अप्प्सुक्षितोमहि
नैकादशस्त्थतेदेवासोयज्ञमिमञ्जुषध्ध्वम् ॥ १९ ॥ उपयामगृहीतोसि॥
उपयामगृहीतोस्याग्ग्रयणोसिस्वाग्ग्रयणः ॥ पाहियज्ञम्पाहियज्ञपतिं
विष्ण्णुस्त्वामिन्द्रियेणपातुविष्ण्णुन्त्वम्पाह्यभिसवनानिपाहि २०॥

सोमः॑पवते ॥ सोमः॑पवतेसोमः॑पवतेस्म्मैब्ब्रह्मणेस्म्मैक्षत्रायास्म्मै
सुन्न्वतेयज॑मानायपवतऽइषऽऊर्ज्जेपवतेद्ध्यऽओष॑धीभ्भ्यःपवतेद्यावा
पृथिवीभ्भ्याम्म्पवतेसुभूतायपवतेव्विश्श्वेभ्भ्यस्त्वादेवेभ्भ्यऽएषतेयो
निर्व्विश्श्वेभ्भ्यस्त्वादेवेभ्भ्यः ॥ २१ ॥ [ ३ ] उपयामगृ॑हीतोसि ॥ उ
पयामगृ॑हीतोसीन्द्रायत्त्वाबृहद्द्वतेवय॑स्स्वतऽउक्क्थाव्ययङ्गृह्णामि ॥ यत्तं
ऽइन्द्रबृहद्द्वयस्तस्म्मैत्त्वाव्विष्णवेत्त्वैषतेयोनिरुक्क्थेभ्भ्यस्त्वादेवेभ्भ्य
स्त्वादेवाव्व्यंय्यज्ञस्यायुषेगृह्णामिमित्रावरुणाभ्भ्यान्त्वा॥२२॥मित्रा
वरुणाभ्भ्यान्त्वा। देवाव्व्यंय्यज्ञस्यायुषेगृह्णामीन्द्रायत्त्वादेवाव्व्यंय्यज्ञ

स्यायुषेगृह्णामीन्द्राग्निभ्यान्त्वादेवाव्यंय्यज्ञस्यायुषेगृह्णामीन्द्रावरु
णाभ्यान्त्वादेवाव्यंयज्ञस्यायुषेगृह्णामीन्द्राबृहस्पतिभ्यान्त्वादेवा
व्यंय्यज्ञस्यायुषेगृह्णामीन्द्राविष्णुभ्यान्त्वादेवाव्यंय्यज्ञस्यायुषेगृ
ह्णामि॥२३॥[२]मूर्द्धानन्दिवः॥मूर्द्धानन्दिवोऽअरतिम्पृथिव्यावैश्वा
नरमृतऽआजातमग्निम् ॥ कविꣳसम्राजमतिथिञ्जनानामासन्नापा
त्रञ्जनयन्तदेवाः ॥ २४ ॥ उपयामगृहीतोसि । ध्रुवोसिध्रुवक्षितिर्ध्रुवा
णान्ध्रुवतमोच्युतानामच्युतक्षित्तमएषतेयोनिर्वैश्वानरायत्त्वा ॥ ध्रुव
न्ध्रुवेणमनसावाचासोममवनयामि ॥ अथानऽइन्द्रइद्विशोसपत्नाः

समनसुस्करत् ॥ २५ ॥ [ २ ] यस्ते । द्रप्सस्स्कन्दतियस्तेऽअꣳशु
ग्र्यावच्युतोधिषणयोरुपस्थात् ॥ अध्वर्योर्वापरिवायःपवित्रात्त
न्तेजुहोमिमनसावषट्कृतꣳस्वाहादेवानामुत्क्रमणमसि ॥२६॥ [१]प्रा
णायमे । वर्चोदावर्चसेपवस्वव्यानायमेवर्चोदावर्चसेपवस्वोदाना
यमेवर्चोदावर्चसेपवस्ववाचेमेवर्चोदावर्चसेपवस्वक्रतूदक्षाभ्या
म्मेवर्चोदावर्चसेपवस्वश्रोत्रायमेवर्चोदावर्चसेपवस्वचक्षुर्भ्याम्मे
वर्चोदसौवर्चसेपवेथामुत्क्रमनेमे ॥ २७ ॥ आत्मनेमे । वर्चो
दावर्चसेपवस्वौजसेमेवर्चोदावर्चसेपवस्वायुषेमेवर्चोदावर्चसेपवस्व

विश्वाभ्योमेप्प्रजाभ्योवर्च्चोदसौवर्च्चसेपवेथाम् ॥२८॥ कोसि । क
तमोसिकस्यासिकोनामासि ॥ यस्यंतेनामामंन्महियन्त्वा सोमेना
तीतृपाम॥भूर्भुवःस्वःसुप्प्रजाःप्प्रजाभिःस्याᳫंसुवीरोवीरैःसुपोषः
पोषैः ॥२९॥[३] उपयामगृहीतोसि ॥ उपयामगृहीतोसिमधवेत्त्वोप
यामगृहीतोसिमाधवायत्त्वोपयामगृहीतोसिशुक्क्रायत्त्वोपयामगृही
तोसिशुचयेत्त्वोपयामगृहीतोसिनभसेत्त्वोपयामगृहीतोसिनभस्या
यत्त्वोपयामगृहीतोसीषेत्त्वोपयामगृहीतोस्यूर्ज्जेत्त्वोपयामगृहीतोसि
सहसेत्त्वोपयामगृहीतोसिसहस्यायत्त्वोपयामगृहीतोसितपसेत्त्वो

पयामगृंहीतोसितपुस्त्यायत्त्वोपयामगृंहीतोस्यꣳहसस्पुतयेत्त्वा ॥
॥ ३० ॥ [ १ ] इन्द्राग्नीऽआगंतम् ॥ इन्द्राग्नीऽआगंतꣳसुतङ्गीर्भि
र्न्नभोवरैण्यम् ॥ अस्यपांतन्धियेषिता ॥ उपयामगृंहीतोसीन्द्राग्नि
भ्यांन्त्वैषतेयोनिरिन्द्राग्निभ्यांत्त्वा ॥ ३१ ॥ [१] आघं ॥ आघाये
ऽअग्निमिन्धतेस्तृणन्तिबुर्हिरांनुषक् ॥ येषामिन्द्रोयुवासखा ॥ उप
यामगृंहीतोस्यग्नीन्द्राभ्यांन्त्वैषतेयोनिरग्नीन्द्राभ्यांन्त्वा ॥ ३२ ॥
[ १ ] ओमांसश्चर्षणीधृतः ॥ ओमांसश्चर्षणीधृतोविश्वेदेवासुऽआ
गंत ॥ दाश्वाꣳसोदाशुर्षःसुतम् ॥ उपयामगृंहीतोसिविश्वेभ्य

स्त्वादेवेभ्यंऽएषतेयोनिर्व्विश्वेभ्यस्त्वादेवेभ्यंः ॥ ३३ ॥ [ १ ] विश्वेदेवासः ॥ विश्वेदेवासुऽआगतशृणुतामऽइमᳬहवंम् ॥ एदम्बुर्हिर्न्निषीदत ॥ उपयामगृहीतोसिविश्वेभ्यस्त्वादेवेभ्यंऽएषतेयोनिर्व्विश्वेभ्यस्त्वादेवेभ्यंः ॥ ३४ ॥ [ १ ] इन्द्रंमरुत्वः ॥ इन्द्रंमरुत्वऽइहपांहिसोमुंय्यथांशाय्र्यातेऽअपिबःसुतस्यं ॥ तवुप्प्रणीतीतवंशूरशर्म्मुन्नाविवासन्तिकवयःसुयज्ञाः ॥ उपयामगृहीतोसीन्द्रांयत्वामुरुत्वंतऽएषतेयोनिरिन्द्रांयत्वामुरुत्वंते॥३५॥ [१] मुरुत्वन्तंवृषुभंवांवृधानमकंवारिन्दिव्यᳬशासमिन्द्रंम् ॥ विश्वासाहमवंसेनूतंनायोग्रᳬसं

होदामिहतꣳहुवेम ॥ उपयामगृहीतोसीन्द्रायत्त्वामुरुत्त्वतऽएषतेयोनिरिन्द्रायत्त्वामुरुत्त्वते ॥ उपयामगृहीतोसिमुरुतान्त्वौजसे ॥
॥ ३६ ॥ [ १ ] सुजोषाऽइन्द्र ॥ सुजोषाऽइन्द्रसगणोमुरुद्भिःसोमम्पिबवृत्रहाशूरविद्वान् ॥ जहिशत्रूँ १ रपमृधोनुदस्वाथाभयङ्कृणुहिविश्वतोनः ॥ उपयामगृहीतोसीन्द्रायत्त्वामुरुत्त्वतऽएषतेयोनिरिन्द्रायत्त्वामुरुत्त्वते ॥ ३७ ॥ [ १ ] मुरुत्त्वाँ २ ऽइन्द्र । वृषभोरणायपिबासोममनुष्वधम्मदाय ॥ आसिञ्चस्वजठरेमद्ध्वऽऊर्म्मिन्त्वꣳराजासिप्रतिपत्सुतानाम् ॥ उपयामगृहीतोसीन्द्रायत्त्वामुरुत्त्वतऽएषते

योनिरिन्द्रांयत्त्वामुरुत्त्वते ॥ ३८ ॥ [ १ ] मुहाँ२इन्द्रः ॥ मुहाँ२ऽइ
न्द्रोनृवदाचर्षणिप्राऽउतद्विबर्हाऽअमिनःसहोभिः॥ अस्म्मुद्र्यग्ग्वावृ
धेवीर्य्यायोरुःपृथुःसुकृतःकुर्तृभिर्भूत् ॥ उपयामगृहीतोसिमहेन्द्राय
त्त्वैषतेयोनिर्म्महेन्द्रायत्त्वा ॥ ३९ ॥ [ १ ] मुहाँ२इन्द्रः॥ मुहाँ२ इन्द्रो
यऽओजसापुर्जन्योवृष्टिमाँ२ऽइव ॥ स्तोमैर्वृत्त्सस्यवावृधे॥उपयामगृ
हीतोसिमहेन्द्रायत्त्वैषतेयोनिर्म्महेन्द्रायत्त्वा ॥४०॥ [१] उदुत्त्यम् ॥
उदुत्त्यञ्जातवेदसन्देवंवहन्तिकेतवः ॥ दृशेविश्वायसूर्य्यःस्वाहा ॥
॥ ४१ ॥ चित्रन्देवानाम् ॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्य

वरुणस्याग्नेः ॥ आप्राद्यावापृथिवीऽअन्तरिक्षꣳसूर्यऽआत्त्माजग
तस्तस्थुषश्चस्वाहा ॥ ४२ ॥ अग्नेनय । सुपथारायेऽअस्मान्विश्वा
निदेववयुनानिविद्वान् ॥ युयोध्यस्मज्जुहुराणमेनोभूयिष्ठान्तेनम
ऽउक्तिंविधेमस्वाहा ॥४३॥ अयन्नः ॥ अयन्नोऽअग्निर्वरिवस्कृणोत्वय
म्मृधःपुरऽएतुप्रभिन्दन् ॥ अयंवाजाञ्जयतुवाजसातावयꣳशत्रूञ्जय
तुजर्हृषाणःस्वाहा ॥४४॥ रूपेणवः ॥ रूपेणवोरूपमभ्यागान्तुथोवो
विश्ववेदाविभजतु ॥ ऋतस्यपथाप्रेतचन्द्रदक्षिणाविस्वःपश्यव्यन्त
रिक्षंयतस्वसदस्यैः ॥४५॥ ब्राह्मणमद्य । विदेयम्पितृमन्तम्पैतृमत्य

मृषिमार्षेयꣳसुधातुदक्षिणम् ॥ अस्म्मद्राता देवत्राग॑च्छतप्रदातार

माविशत ॥ ४६ ॥ अग्नयेत्त्वा ॥ अग्नयेत्त्वामह्यँवरुणोददातुसोमृत

त्त्वमशीयायुर्दात्रऽएधिमयोमह्यम्प्रतिग्ग्रहीत्रेरुद्रायत्त्वामह्यँवरुणो

ददातुसोमृतत्त्वमशीयप्प्राणोदात्रऽएधिवयोमह्यम्प्रतिग्ग्रहीत्रेबृह

स्प्पतयेत्त्वामह्यँवरुणोददातुसोमृतत्त्वमशीयत्त्वग्ग्दात्रऽएधिमयो

मह्यम्प्रतिग्ग्रहीत्रेयमायत्त्वामह्यँवरुणोददातुसोमृतत्त्वमशीयह

योदात्रऽएधिवयोमह्यम्प्रतिग्ग्रहीत्रे ॥ ४७ ॥ कोदात् ॥ कोदात्कस्म्माऽ

अदात्कामोदात्कामायादात् ॥ कामोदाताकामः प्प्रतिग्ग्रहीताकामै

तत्वं ॥ ४८ ॥ [ ८ ] ॥ २५ ॥ इतिंश्रीवाजसनेयसंहितायांसप्तमोऽध्यायः ॥ ७ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्सूत्रम् ॥ उपयामगृहीतोसि आदित्त्येभ्यः पञ्च वाममद्य द्वे सुशर्मास्येका वृहस्पतिसुतस्य द्वे हरिरसिचतस्रः समिन्द्रणोष्टौ माहिरेजतुदश मास्यःपञ्चकावातिष्ठयुक्ष्वाहीन्द्रामिदेकैका यस्मान्नद्वेग्नेपवस्वोत्तिष्ठन्ऽदृश्रमुदुत्त्यमेकैकाजिघ्रद्वे विनइन्द्रवाचस्पतिंविश्वकर्मन्नेकैकाग्नयेत्त्वाचतस्र इहरतिस्तिस्रः परमेष्ठीदश त्रयोविꣳशतिस्त्रिषष्टिः ॥

हरिः ॐ उपयामगृहीतोसि ॥ उपयामगृहीतोस्यादित्त्येभ्यस्त्वा ॥

व्विष्णंऽउरुगायैषतेसोमुस्त्तꣳरंक्षस्वुमात्त्वांदभन् ॥ १ ॥ कुदाचुन । स्त्तरीरंसिनेन्द्रंसश्चसिदाशुषें ॥ उपोपेन्नुमंघवन्भूयऽइन्नुतेदानंन्दे वस्यंपृच्च्यतऽआदित्त्येभ्यंस्त्वा ॥ २ ॥ कुदाचुन । प्प्रयुंच्छस्युभं निपासिजन्मंनी ॥ तुरीयादित्त्युसवंनन्तऽइन्द्रियमातंस्त्थावुमृतं न्दिव्यादित्त्येभ्यंस्त्वा ॥ ३ ॥ यज्ञोदेवानांम् ॥ यज्ञोदेवानाम्प्प्र त्त्यंतिसुम्नमादित्त्यासोभवंतामृडयन्तंः ॥ आवोर्व्वाचीसुमतिर्व्वं त्त्यादꣳहोश्चिद्यार्व्वरिवोवित्तरासंदादित्त्येभ्यंस्त्वा ॥ ४ ॥ व्विवंस्व न्नादित्त्य ॥ व्विवंस्वन्नादित्त्यैषतेसोमपीथस्त्तस्मिन्मत्त्स्व ॥ श्रदं

स्म्मैनरोवर्चसेदधातनुयदाशुर्दार्दम्पतीव्वाममश्नुतः ॥ पुमान्त्पुत्त्रो
जायतेव्विन्दतेव्वस्वधाव्विश्वाहारपऽएधतेगृहे ॥ ५ ॥ [५] व्वाममद्य ।
सवितर्व्वाममु श्वोदिवेदिवेव्वाममस्म्मभ्यꣳसावीः ॥ व्वामस्यहिक्षय
स्यदेवभूरेरयाधियाव्वामभाजःस्याम ॥ ६ ॥ उपयामगृहीतोसि ।
सावित्त्रोसिचनोधाश्चनोधाऽअसिचनोमयिधेहि ॥ जिन्वयज्ञञ्जिन्व
यज्ञपतिम्भगायदेवायत्त्वासवित्त्रे ॥ ७ ॥ [२] शतम् ३०० ॥
उपयामगृहीतोसि । सुशर्म्मासिसुप्प्रतिष्ठानोबृहदुक्षायनमः ॥ विश्वे
भ्यस्त्वादेवेभ्यऽएषतेयोनिर्व्विश्वेभ्यस्त्वादेवेभ्यः ॥ ८ ॥ [१]

उपयामगृहीतोसि ॥ उपयामगृहीतोसिबृहस्पतिसुतस्यदेवसोमत
ऽइन्द्रोरिन्द्रियावतुःपत्क्नीवतोग्ग्रहाँ २ । ऽऋद्ध्यासम् । अहम्पुर
स्तादहमवस्ताद्यदन्तरिक्षन्तदमेपिताभूत् ॥ अहꣳसूर्य्यमुभय
तोददर्शाहन्देवानाम्मपरमङ्गुहायत् ॥ ९ ॥ अग्ग्नाइऽइपत्क्नीवन् ॥
अग्ग्नाइऽइपत्क्नीवन्त्सजूर्देवेनत्त्वष्ट्रासोमम्पिबस्वाहा ॥ प्रजापतिर्वृ
षासिरेतोधारेतोमयिधेहिप्प्रजापतेस्तेवृष्णोरेतोधसोरेतोधामशीय
॥ १० ॥ [ २ ] उपयामगृहीतोसि ॥ उपयामगृहीतोसिहरिरसि
हारियोजनोहरिब्भ्यान्त्वा ॥ हर्य्योर्द्धानास्त्थसहसोमाऽइन्द्राय ॥

॥ ११ ॥ यस्ते ऽअश्वसनिर्भक्षो यो गोसनिस्तस्य तऽइष्टयजुषस्तु
तस्तोमस्य शस्तोक्थस्योपहूतस्योपहूतो भक्षयामि ॥ १२ ॥ देवकृ
तस्यैनसः ॥ देवकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवय
जनमसि पितृकृतस्यैनसोऽवयजनमस्यात्मकृतस्यैनसोऽवयजनमस्ये
नसऽएनसोऽवयजनमसि ॥ यच्चाहमेनो विद्वाँश्चकार यच्चाविद्वाँस्त
स्य सर्वस्यैनसोऽवयजनमसि ॥ १३ ॥ संवर्चसा ॥ संवर्चसा पयसा
सन्तनूभिरगन्महि मनसा सꣳ शिवेन ॥ त्वष्टा सुदत्रो विदधातु रायोऽनु
मार्ष्टु तन्वो यद्विलिष्टम् ॥ १४ ॥ [४] समिन्द्र । णो मनसा नेषि गो

भिःसꣳसूरिभिर्म्मघवन्त्सꣳस्वस्त्या ॥ सम्ब्रह्मणादेवकृतंयदस्त्तिसन्देवानाꣳसुमतौयज्ञियानाꣳस्वाहा ॥ १५ ॥ संवर्च्चसा ॥ संवर्च्चसापयसासन्तनूभिरगन्महिमनसासꣳशिवेन ॥ त्वष्टासुदत्त्रोविदधातुरायोनुमार्ष्टुतन्वोयद्विलिष्टम् ॥ १६ ॥ धातारातिःसवितेदञ्जुषन्ताम्प्रजापतिर्न्निधिपादेवोऽअग्निः ॥ त्वष्टाविष्णुःप्प्रजयाꣳसꣳरराणायजमानायद्रविणन्दधातुस्वाहा ॥ १७ ॥ सुगावः ॥ सुगावोदेवाःसदनाऽअकर्म्मयऽआजग्मेदꣳसवनञ्जुषाणाः ॥ भरमाणाव्वहमानाहवीꣳष्यस्मेधत्तवसवोव्वसूनिस्वाहा ॥१८॥ यॉँरआवहः॥

याँ२ आवहऽउशतोदेवदेवाँस्तान्प्रेरयस्वेऽअग्नेसुवस्थे ॥ जक्षिवाꣳ
सःपपिवाꣳसश्चविश्वेसुधर्मꣳस्वरातिष्ठतानुस्वाहा ॥ १९ ॥ वय
ꣳहि । त्वाम्प्रयतियज्ञेऽअस्मिन्नग्नेहोतारमवृणीमहीह ॥ ऋधग
याऽऋधगुताशमिष्ठाःप्रजानन्यज्ञमुपयाहिविद्वान्त्स्वाहा ॥ २० ॥
देवागातुविदः ॥ देवागातुविदोगातुंवित्त्वागातुमित ॥ मनसस्पतऽ
इमन्देवयज्ञꣳस्वाहावातेधाः ॥२१॥ यज्ञंयज्ञम् ॥ यज्ञंयज्ञङ्गच्छयज्ञ
पतिङ्गच्छस्वांयोनिङ्गच्छस्वाहा ॥ एषतेयज्ञोयज्ञपतेसहसूक्तवाकः
सर्ववीरस्तञ्जुषस्वस्वाहा ॥ २२ ॥ [८] माहिः ॥ माहिर्भूर्मापृ

दांकुः । उरुᳪहिराजावरुणश्चकारसूर्य्यायपन्थामन्वेतवाऽउं ॥ अप
देपादाप्प्रतिधातवेकरुतापवक्ताहृदयाविधश्चित् ॥ नमोवरुणायाभि
ष्ठितोवरुणस्यपाशः ॥ २३ ॥ अग्नेरनीकम् ॥ अग्नेरनीकमपऽआवि
वेशापान्नपात्प्रतिरक्षन्नसुर्य्यम् ॥ दमेदमेसमिधंयक्ष्यग्नेप्प्रतिते
जिह्वाघृतमुच्चरण्यत्स्वाहा ॥२४॥ समुद्रेत ॥ समुद्रेतेहृदयमप्स्वन्तः
सन्त्वाविशन्त्वोषधीरुतापः ॥ यज्ञस्यत्वायज्ञपतेसूक्तोक्तौनमोवाके
विधेमयत्स्वाहा ॥२५॥ देवीरापः ॥ देवीरापऽएषवोगर्भस्तᳪसुप्री
तᳪसुभृतम्बिभृत ॥ देवसोमैषतेलोकस्तस्मिञ्छञ्चवक्ष्वपरिचव

वक्ष्व ॥ २६ ॥ अवंभृथनिचम्पुण । निचेरुरंसिनिचम्पुणः ॥ अवंदेवै
र्द्देवकृतमेनोयासिषुमवमर्त्त्यैर्म्मर्त्त्यकृतम्पुरुराव्णोदेवारिषस्प्पाहि
देवानांᳬसमिदसि ॥ २७ ॥ [ ५ ] एजंतुदशमास्यः ॥ एजं
तुदशमास्योगर्ब्भोजरायुणासुह ॥ यथायंव्वायुरेजंतियथासमुद्रएज
जेति ॥ एवायन्दशमास्योऽअस्रञ्जरायुणासुह ॥ २८ ॥ यस्यैते ॥ यु
ज्ञियोगर्ब्भोयस्यैयोनिर्हिरण्ययी ॥ अङ्गान्यह्रुतायस्यतम्मात्रासम
जीगमᳬस्वाहा ॥ २९ ॥ पुरुदस्मोविषुरूपः ॥ पुरुदस्मोविषु
रूपऽइन्दुरन्तर्म्महिमानमानञ्जधारः ॥ एकंपदीन्द्विपदीन्त्रिपदीश्च

तुष्पदीमुष्टापंदीम्भुवनानुंप्प्रथन्तार्ठस्वाहां ॥ ३० ॥ मरुंतोयस्यं॥
मरुंतोयस्युहिक्षयेंपाथादिवोविमहसः ॥ ससुंगोपातंमोजनंः ॥३१॥
मुहीद्यौः। पृंथिवींचनऽइमंय्युज्ञम्मिमिक्षताम्॥पिपृतान्नोभरींमभिः॥
॥ ३२ ॥ [५] आतिष्ठ । वृत्रहुन्त्रथंय्युक्तातेब्रह्मंणाहरीं ॥ अुर्व्वाचीं
नर्ठसुतेमनोग्ग्रावांकृणोतुवुग्नुनां ॥ उपयामगृंहीतोसीन्द्रांयत्त्वा
षोडशिनंऽएषतेयोनिरिन्द्रांयत्त्वाषोडशिनें ॥ ३३ ॥ [१] युु
क्ष्वाहि । केशिनाहरीवृषंणाकक्ष्युप्प्रा ॥ अथांनऽइन्द्रसोमपा
गिरामुपंश्श्रुतिञ्चर ॥ उपयामगृंहीतोसीन्द्रांयत्त्वाषोडशिनंऽएषते

योनिरिन्द्राय॑त्त्वाषोडुशिने॑ ॥ ३४॥ [ १ ] इन्द्रुमित् ॥ इन्द्रुमिद्धरी
वहुतोप्प्रतिधृष्टशवसम् ॥ ऋषीणाञ्चस्तुतीरुपंयुज्ञञ्चुमानुंषाणाम् ॥
उुपयामगृंहीतोसीन्द्राय॑त्त्वाषोडशिनेऽएषतेयोनिरिन्द्राय॑त्त्वाषोड
शिने॑ ॥ ३५ ॥ [ १ ] यस्म्मान्न । जातःपरोऽअन्न्योऽअस्तियऽआंवि
वेशुभुवनानिविश्श्वा ॥ प्रजापतिःप्प्रजयांसᳬरराुणस्त्रीणिज्ज्योती
ᳫंषिसचतेसषोडशी ॥ ३६ ॥ इन्द्रंश्च । सुम्म्राड्वरुणश्चुराजा
तौतेभुक्षञ्चंक्रतुरग्ग्रंऽएतम् ॥ तयोरुहमनुंभुक्षम्भंक्षयामिवाग्ग्देवी
जुंषाणासोमंस्यतृप्प्यतुसुहप्प्राणेनुस्वाहा ॥ ३७ ॥ [ २ ] अग्ग्नेपवं

स्व ॥ अग्नेपवंस्वुस्वपाऽअस्म्मेव्वर्च्चं॑ःसुवीर्य्यम् ॥ दधंद्रुयिम्म
यिपोषंम् ॥ उपयामगृंहीतोस्युग्नयैत्त्वाव्वर्च्चस॑ऽएषतुयोनिरुग्नयेत्त्वाव्व
र्च्चसे ॥ अग्नेव्वर्च्चस्विुव्वर्च्चस्वाुस्त्वन्देवेष्ष्वसिवर्च्चस्वानुहम्म्मंनुष्ष्ये
पुभूयासम् ॥३८॥ [१] उत्तिष्ठुन्नोजंसा ॥ उत्तिष्ठुन्नोजंसासुहपीत्वीशि
प्रेऽअवेपयः ॥ सोमंमिन्द्रचुमूसुतम् ॥ उपयामगृहीतुोसीन्न्द्रायुत्त्वौ
जंसऽएषतुयोनिरिन्न्द्रायुत्त्वौजंसे ॥ इन्द्रौजिष्ठौजिष्ठुस्त्वन्देवेष्ष्वस्यो
जिष्ठोहम्म्मंनुष्ष्येषुभूयासम् ॥ ३९ ॥ [ १ ] अहश्श्रमस्य ॥ अहश्श्रम
स्यकुतवोविरश्म्मयोजनाँ२ अनुं ॥ भ्राजंन्तोऽअग्नयोयथा ॥

उपयामगृहीतोसिसूर्य्यायत्वाभ्राजायैषतेयोनिःसूर्य्यायत्वाभ्रा
जाय ॥ सूर्यभ्राजिष्ठभ्राजिष्ठस्त्वन्देवेष्वसिभ्राजिष्ठोहम्मनु
ष्येषुभूयासम् ॥ ४० ॥ [ १ ] उदुत्यम् ॥ उदुत्यञ्जातवेदसन्देवंव
हन्तिकेतवः ॥ दृशेविश्वायसूर्य्यम् ॥ उपयामगृहीतोसिसूर्य्यायत्वा
भ्राजायैषतेयोनिःसूर्य्यायत्वाभ्राजाय ॥ ४१ ॥ [ १ ] आजिघ्र ।
आजिघ्रकलशम्महीत्वाविशन्त्विन्दवः ॥ पुनरूर्ज्जानिवर्त्तस्वसा
नःसहस्रन्धुक्ष्वोरुधारापयस्वतीपुनर्म्माविशताद्रयिः ॥ ४२ ॥ इडे
रन्तेइडेरन्तेहव्येकाम्म्येचन्द्रेज्योतेदितेसरस्वतिमहिविश्रुति ॥

एतातेऽअग्न्युनामौनिदुवेब्भ्योमासुकृतंम्भूतात् ॥ ४३ ॥ [ २ ] वि
नः ॥ विनंऽइन्द्रमृधोजहिनीचायच्छपृतन्न्युतः ॥ योऽअस्म्माँ२अ
भिदासत्त्यधरङ्गमयातमः ॥ उपयामगृहीतोसीन्द्रायत्त्वाविमृधऽएष
तेयोनिरिन्द्रायत्त्वाविमृधे ॥ ४४ ॥ [ १ ] वाचस्पतिं । विश्वकर्म्मा
णमूतयेमनोजुवंवाजेऽअद्याहुवेम ॥ सनोविश्वानिहवनानिजोषद्वि
श्वशम्भूरवसेसाधुकर्म्मा ॥ उपयामगृहीतोसीन्द्रायत्त्वाविश्वकर्म्म
णऽएषतेयोनिरिन्द्रायत्त्वाविश्वकर्म्मणे ॥ ४५ ॥ [ १ ] विश्वक
र्म्मन्हविषा ॥ विश्वकर्म्मन्हविषावर्द्धनेनत्रातारमिन्द्रमकृणोरव

द्ध्यम् ॥ तस्मैविशःसमनमन्तपूर्व्वीरयमुग्ग्रोविहव्योयथासत् ॥ उप
यामगृहीतोसीन्न्द्रायत्त्वाविश्श्वकर्म्मणऽएषतेयोनिरिन्न्द्रायत्त्वावि
श्श्वकर्म्मणे ॥ ४६ ॥ [ १ ] उपयामगृहीतोसि ॥ उपयामगृहीतोस्य
ग्ग्नयेत्त्वागायत्त्रच्छन्न्दसङ्गृह्णामीन्न्द्रायत्त्वात्त्रिष्टुप्प्छन्न्दसङ्गृह्णामिवि
श्श्वेब्भ्यस्त्त्वादेवेब्भ्योजगच्छन्न्दसङ्गृह्णाम्म्यनुष्टुप्प्तेभिगरः ॥ ४७ ॥
व्रेशीनान्त्त्वा ॥ व्रेशीनान्त्त्वापत्त्मन्नाधूनोमिकुकूननानान्त्त्वापत्त्मन्
न्नाधूनोमिभन्न्दनानान्त्त्वापत्त्मन्नाधूनोमिमदिन्न्तमानान्त्त्वापत्त्मन्
न्नाधूनोमिमधुन्न्तमानान्त्त्वापत्त्मन्नाधूनोमिशुक्रन्त्त्वाशुक्रआधूनो

म्म्यन्हौंरूपेसूर्य्यस्यरश्मिमषुं ॥ ४८॥ ककुभश्रूपं । वृषभस्यरोच
तेवृहच्छुक्रश्शुक्रस्यपुरोगाःसोमःसोमस्यपुरोगाः ॥ यत्तेसोमादाभ्य
न्नामजागृवितस्मैत्त्वागृह्णामितस्मैतेसोमसोमायस्वाहा ॥ ४९ ॥ उ
शित्त्वम् ॥ उशिक्त्वन्देवसोमाग्नेः प्प्रियम्पाथोपीहिवशीत्त्वन्देवसो
मेन्द्रस्यप्प्रियम्पाथोपीह्यस्मत्सखात्त्वन्देवसोमविश्श्वेषान्देवानां
प्प्रियम्पाथोपीहि ॥ ५० ॥ [ ४ ] इहरतिः ॥इहरतिरिहरमद्ध्वमिहधृ
तिरिहस्वधृतिःस्वाहा ॥ उपसृजन्धरुणम्मात्रेधरुणोमातरन्धयन् ॥
रायस्प्पोषमस्मासुदीधरत्स्वाहा ॥ ५१ ॥ सत्रस्यऋद्धिः ॥ सत्र

स्युऽऋद्धिरुस्यगंन्मुज्ज्योतिरुमृताऽअभूम ॥ दिवंम्पृथिव्याऽअद्ध्या
रुंहामाविदामदेवान्त्स्वुर्ज्ज्योतिः ॥ ५२ ॥ युवन्तम् ॥ युवन्तमिन्द्रा
पर्व्वतापुरोयुधायोनंः पृतन्न्यादपुतन्तुमिद्धंतंव्वज्रेणुतन्तुमिद्धंतम् ॥
दूरेचुत्तायच्छन्त्सुद्गहंनुंय्यादिनक्षत् ॥ अस्म्माकुंशत्रून्पारिशूरविु
श्वतोदुम्मार्दर्षीष्टुविुश्वतः ॥ भूर्भुवुःस्वः सुप्रजाःप्रजाभिःस्या
मसुवीरावीरैःसुपोषाःपोषैः ॥ ५३ ॥ [३] पुरुमेष्ठ्यभिधीतः । प्रजाप
तिर्व्वाचिव्याहृतायामन्धोऽअच्छेतःसविुतासुन्न्याम्विश्वकर्म्मादीक्षा
यांम्पूषासोमुक्क्रयंण्ण्यामिन्द्रंश्च ॥ ५४ ॥ इन्द्रंश्च । मुरुतंश्चक्क्रयायो

पोतिथुतोसुरःपुण्यमानोमित्रःक्रीतोव्विष्णुःशिपिविष्टऽऊरावासन्नो
व्विष्णुन्नरन्धिषःप्प्रोह्यमाणः ॥ ५५ ॥ प्प्रोह्यमाणऽसोमऽआगतो
वरुणऽआसन्दीमासन्नोग्निराग्नीध्रऽइन्द्रोहविर्द्धानेथर्वोपावह्रियमा
णोविश्श्वेदेवाः ॥ ५६ ॥ व्विश्श्वेदेवाः ॥ व्विश्वेदेवाऽअꣳशुषुन्यु
प्तोव्विष्णुराप्रीतपाऽआप्याय्यमानोयमःसूयमानोव्विष्णुःसम्भ्रि
यमाणोव्वायुःपूयमानःशुक्रःपूतःशुक्रःक्षीरश्श्रीम्मन्थीसक्तुश्श्रीव्विश्श्वे
देवाः ॥ ५७ ॥ व्विश्श्वेदेवाः ॥ व्विश्श्वेदेवाश्चमसेषून्नीतोसुर्होमायोद्यतोरुद्रोहूयमानोव्वातोभ्यावृत्तोनृचक्षाःप्प्रतिख्यातोभक्षो

भुक्ष्यमाणꣳपितरोनाराशꣳसाः ॥ ५८ ॥ सुन्नःसिन्धुः ॥ सुन्नःसिन्धु
रवभृथायोद्यतꣳसमुद्रोऽभ्यवह्रियमाणꣳसलिलःप्रप्लुतोययोरोजसा
स्कभितारजाꣳसिवीर्येभिर्वीरतमाशविष्ठा ॥ यापत्येतेऽअप्रती
तासहोभिर्विष्णूऽअगुन्वरुणापूर्वहूतौ ॥ ५९ ॥ देवान्दिवम् ॥ देवा
न्दिवमगन्यज्ञस्ततोमाद्रविणमष्टुमनुष्यानुन्तरिक्षमगन्यज्ञस्ततो
माद्रविणमष्टुपितॄन्पृथिवीमगन्यज्ञस्ततोमाद्रविणमष्टुयङ्कञ्चलोकम
गन्यज्ञस्ततोभुद्रमभूत् ॥ ६० ॥ चतुस्त्रिꣳशत्तन्तव ॥ चतुस्त्रिꣳ
शत्तन्तवोयेवितत्निरेयऽइमंयुज्ञꣳस्वधयाददन्ते ॥ तेषाञ्छिन्नꣳ

सम्म्वेतद्धामिस्वाहांघुम्मोंऽअप्प्येंतुदेवान् ॥ ६१ ॥ युज्ञस्युदोहं ॥
युज्ञस्युदोहोविततंऽपुरुत्रासोऽअंह्रधादिवंमुन्वातंतान ॥ सयंज्ञधु
क्ष्वुमहिंमेप्प्रुजायांॅंरायस्प्पोषुंविश्वुमायुंरशीयस्वाहां ॥ ६२ ॥
आपंवस्व ॥ आपंवस्वुहिरंण्ण्यवुदश्श्ववंत्सोमवुीरवंत् ॥ वाजङ्गोमंन्तु
माभंरुस्वाहां ॥ ६३ ॥ [ १० ] ॥ २३ ॥ इतिश्रीवाजसनेयसंहिता
यामष्टमोऽध्यायः॥८॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्सूत्रम् ॥ देवस
वितश्चतस्त्रःइन्द्रस्यवज्रःपञ्चदेवस्याहंदशआपयेतिस्त्रःवाजस्येममष्टौ
अग्निरेकाक्षरेणैषतेचतुष्कौसविताद्वे अष्टौचत्वारिंशत् । हरिःॐ देवं

सावितं ॥ देवंसवितुःप्प्रसुवयुज्ञम्प्रसुवयुज्ञपतिम्भगाय ॥ दिव्योग
न्धुर्वः केतुपूः केतंन्नःपुनातुवाचस्पतिर्वाजंन्नःस्वदतुस्वाहा ॥ १ ॥
ध्रुवसदन्त्वा । नृषदम्मनःसदमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णा
म्म्येषतेयोनिरिन्द्रायत्त्वाजुष्टतमम् ॥ अप्सुषदन्त्वाघृतसदंव्योम
सदमुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वा
जुष्टतमम् ॥ पृथिवीसदन्त्वान्तरिक्षसदन्दिविसदन्देवसदन्नाकसद
मुपयामगृहीतोसीन्द्रायत्त्वाजुष्टङ्गृह्णाम्म्येषतेयोनिरिन्द्रायत्त्वाजुष्ट
तमम् ॥ २ ॥ उपाꣳसम् ॥ उपाꣳसुमुद्र्यसꣳसूर्य्यैसन्तꣳसमा

हिंतम् ॥ अुपाꣳरसंस्युयोरसुस्त्तंवोंगृह्णाम्म्युत्तममुपंयुामंगृहीतोसी
न्द्रांयत्त्वाजुष्टंङ्गृह्णाम्म्येुषतेुयोनिुरिन्द्रांयत्त्वाजुष्टंतमम् ॥ ३ ॥ ग्रहांऽ
ऊर्ज्जांहुतयः ॥ ग्रहांऽऊर्ज्जांहुतयोव्यन्तोंविप्प्रांयमुतिम् ॥ तेषांविं
शिप्प्रियाणाव्वोहमिषमूर्ज्जꣳसमंग्ग्रभमुपयामगृंहीतोसीन्द्रांयत्त्वाजु
ष्टंङ्गृह्णाम्म्येुषतेुयोनिुरिन्द्रांयत्त्वाजुष्टंतमम् ॥ सुम्मपृचौंस्त्थुःस
म्मांभुद्रेणंपृङ्क्तं विपृचौंस्त्थोविमांपाप्मनांपृङ्क्तम् ॥ ४ ॥ [ ४ ] इन्द्रंस्युव
ज्ज्रंः ॥ इन्द्रंस्युवज्ज्रोंसिवाजुसास्त्वयायंवाजꣳसेत् ॥ वाजंस्युनुप्प्रंसुवे
मातरंम्मुहीमदिंतिन्नामुवचंसाकरामहे ॥ यस्यांमिदंविश्श्वम्मभुवंन

संहि. माविशेतस्यान्नोदेवःसविताधर्म्मंसाविषत्।५॥अप्स्वन्तः॥अप्स्व
॥५६॥ न्तरमृतमप्सुभेषजमपामुतप्रशस्तिष्वश्वाभवतवाजिनः ॥ दे
वीरापोयोवऽऊर्म्मिःप्रतूर्त्तिःककुन्मान्वाजसास्तेनायंवाजꣳसेत् ॥
॥ ६ ॥ वातोवा ॥ वातोवामनोवागन्धर्वाःसप्तविꣳशतिः ॥ तेऽअग्ग्रे
ऽश्वमयुञ्जँस्तेऽअस्मिञ्जवमादधुः ॥ ७ ॥ वातꣳरꣳहाभववाजिन्यु
ज्यमानऽइन्द्रस्येवदक्षिणःश्रियैधि ॥ युञ्जन्तुत्वामरुतोविश्ववेद
सऽआतेत्वष्टापत्सुजवन्दधातु ॥ ८ ॥ जवोयः ॥ जवोयस्तेवाजिन्नि ॥५६॥
हितोगुहायःश्येनेपरीत्तोऽअचरच्चवाते ॥ तेननोवाजिन्बलवान्बलेन

व्वाजुजिद्धुभवुसमनेचपारयिष्णणुः ॥ व्वाजिनोव्वाजजितुोव्वाजᳬसरि
ष्ष्यन्तुोबृहुस्प्पतेर्भ्भागमवजिग्घ्रत ॥ ९ ॥ [ ५ ] देवस्याहम् ॥ देव
स्याहᳬसवितुःसुवेसुत्त्यसवसोबृहुस्प्पतेरुत्तमन्नाकᳬरुहेयम् ॥ देव
स्याहᳬसवितुःसुवेसुत्त्यसवसुऽइन्द्रस्योत्तुमन्नाकᳬरुहेयम् ॥ देव
स्याहᳬसवितुःसुवेसुत्त्यप्प्रसवसोबृहुस्प्पतेरुत्तुमन्नाकमरुहम् ॥ देव
स्याहᳬसवितुःसुवेसुत्त्यप्प्रसवसुऽइन्द्रस्योत्तुमन्नाकमरुहम् ॥ १० ॥
बृहस्प्पतेव्वाजम् ॥ बृहस्प्पतुव्वाजञ्जयबृहुस्प्पतयेव्वाचव्वदतुबृहुस्प्पतिं
व्वाजञ्जापयत ॥ इन्द्रव्वाजञ्जयेन्द्रायुवाचव्वदुतेन्द्रंव्वाजञ्जापयत ॥११॥

एषावंः ॥ एषावुःसासुत्त्यासुंव्वागंभूद्ययाब्बृहुस्प्पतिंव्वाुजमजीजपुता
जीजपतुब्बृहुस्पतिंवाजुंव्वनंस्प्पतयोव्विमुंञ्च्चयद्धम् ॥ एषावुःसासुत्त्या
सुंव्वागंभूद्ययन्द्रंव्वाजुमजीजपुताजीजपुतेन्द्रंव्वाजुंव्वनस्प्पतयोव्विमुंञ्च्चय
द्धम् ॥ १२ ॥ देुवस्याहम् ॥ देुवस्याहऽसंवितुःसुवेसुत्यप्प्रसव
सोब्बृहुस्प्पतेर्व्वाजुजितोव्वाजंञ्जेषम् ॥ व्वाजिनोवाजजितोद्ध्वंनस्कभ्नु
वन्तोयोजंनामिमांनाऽकाष्ठांग्गच्छत ॥ १३ ॥ एषस्यं ॥ एषस्यव्वाजी
क्षिपुणिन्तुरण्ण्यतिग्ग्रीवायांम्बुद्धोऽअपिकुक्षऽआसनिं ॥ क्रतुंन्दधि
क्क्राऽअनुसऽसंनिष्ष्यदत्पथामङ्काऽस्यन्ववापनीफणत्स्वाहां ॥ १४ ॥

उतस्म्म ॥ उतस्मांस्युद्रवंतस्तुरण्ण्युतःपुर्ण्णन्नवेरनुवातिप्प्रगुर्द्धिनं÷
श्येनस्येवद्ध्रजंतोऽअङ्कुसम्पारिंदधिक्क्राव्वण्णं÷सुहोर्ज्जातारिंत्रतुंऽस्वाहां ॥
॥ १५ ॥ शन्नं÷ ॥ शन्नौंभवन्तुव्वाजिनुोहवेषुदेवतांतामितद्द्रंवंऽस्व
र्क्काः ॥ जुम्भयुन्तोहिंवृकुर्ठरक्षांर्ठसिसनेम्म्युस्म्मद्युंयवुन्नमींवाः ॥
॥ १६ ॥ तेनं÷ ॥ तेनुोऽअर्व्वन्तोहवनुश्श्रुतोहवंविश्श्वेशृण्ण्वन्तुव्वाजि
नोंमितद्द्रंवः ॥ सुहुस्त्रुसामेधसातासनिुष्ष्यवोंमुहोयेधनंर्ठसमिथेषु
जभ्भ्रिरे ॥ १७ ॥ व्वाजेवाजेवत । व्वाजिनोनुोधनेषुव्विप्प्राऽअमृताऽ
ऋतज्ञाः ॥ अुस्यमद्ध्वं÷पिवतमादयंद्धन्तृप्तायातपथिभिर्द्देवुयानैः ॥

॥ १८ ॥ आमावाजस्यप्रसवोजगम्म्यादेमेद्यावापृथिवीविश्वरूपे ॥ आमांगन्तामिपतरामातराचामासोमोऽअमृतत्त्वेनगम्म्यात् ॥ वाजिनोवाजजितोवाजᳬंससूवाᳬंसोबृहस्पतेर्भागमवजिघ्रतानिमृजानाः ॥ १९ ॥ [ १० ] आपयेस्वाहा । स्वापयेस्वाहापिजायस्वाहाक्रतवेस्वाहावसवेस्वाहाहर्पतयेस्वाहाह्नेमुग्धायस्वाहामुग्धायवैनᳬंशिनायस्वाहाविनᳬंशिनऽआन्त्यायनायस्वाहान्त्यायभौवनायस्वाहाभुवनस्यपतयेस्वाहाधिपतयेस्वाहा ॥ २० ॥ आयुर्य्यज्ञेन । कल्पतांप्राणोयज्ञेनकल्पताञ्चक्षुर्य्यज्ञेनकल्पताᳬं

श्रोत्रंञ्यज्ञेनंकल्पताम्पृष्ठंञ्यज्ञेनंकल्पतांञ्यज्ञोयज्ञेनंकल्पताम् ॥
प्रजापंतेःप्रजाऽअंभूमस्वर्देवाऽअगन्मामृताऽअभूम ॥ २१ ॥
अस्मेवः ॥ अस्मेवोऽअस्त्विन्द्रियमस्मेनृम्णमुतक्रतुरस्मेव
र्च्चांसिसन्तुवः ॥ नमोमात्रेपृथिव्यैनमोमात्रेपृथिव्याऽइयन्तेराड्य
न्तासियमनोध्रुवोसिधरुणः ॥ कृष्यैत्वाक्षेमायत्वारय्यैत्वापोषा
यत्वा ॥ २२ ॥ [ ३ ] वाजस्येमम् ॥ वाजस्यमम्प्रसुवःसुषुवेग्रेसोम
ᳫराजानमोषधीष्वप्सु ॥ ताऽअस्मभ्यम्मधुमतीर्भवन्तुवय
ᳫराष्ट्रेजागृयामपुरोहिताःस्वाहा ॥ २३ ॥ वाजस्येमाम् ॥ वाजस्येमा

म्प्रंसुवश्शिाश्श्रियेदिवंमिमाचुविश्श्वाभुवनानिसुम्म्राट् ॥ अदित्त्स
न्तन्दापयतिप्प्रजानन्त्सनौरुयिᳬसर्व्ववीरन्नियच्छतुस्वाहा ॥ २४ ॥
वाजस्युनु । प्प्रंसुवऽआवंभूवेमाचुविश्श्वाभुवनानिसुर्व्वतः ॥ सनें
मिराजापरियातिविद्द्वान्प्रुजाम्पुष्टिंवुर्द्धयमानोऽअस्म्मेस्वाहा ॥ २५ ॥
सोमुᳬराजानम् ॥ सोमुᳬराजानुमवंसेग्ग्निमुन्वारंभामहे ॥ आदि
त्त्यान्विष्णुᳬसूर्य्यम्ब्रह्माणंञ्चुबृहस्पतिᳬस्वाहा ॥ २६ ॥ अर्य्युमणु
म्बृहस्प्पतिम् ॥ अर्य्युमणुम्बृहस्प्पतिमिन्द्रन्दानायचोदय ॥ वाचुं
विष्ष्णुᳬसरस्वतीᳬसवितारंञ्चवाजिनᳬस्वाहा॥२७॥अग्नेऽअच्छ ॥

अग्ने॑ऽअच्छा॑वदे॒ह नः॑ प्र॒तिन॑ः सु॒मना॑भव ॥ प्रनो॑यच्छसहस्रजि॒त्त्वꣳ
हि॒धन॒दाऽअसि॒स्वाहा॑ ॥२८॥ प्रनः॑ ॥ प्रनो॑यच्छ॒त्त्वर्य॒माप्र॒पूषाप्र
बृह॒स्पति॑ः ॥ प्रवाग्दे॒वीद॑दातुनः॒स्वाहा॑ ॥ २९ ॥ दे॒वस्य॑त्त्वासवि॒तुः
प्र॑स॒वे॒ऽश्विनो॑र्बा॒हुभ्या॑म्पू॒ष्णोहस्ता॑भ्याम् ॥ सर॑स्वत्यैवा॒चोय॒न्तु
र्य॒न्त्रियेद॑धामि॒बृह॒स्पते॒ष्ट्वासा॑म्राज्ज्येना॒भिषि॑ञ्चाम्यसौ ॥ ३० ॥
[ ८ ] अ॒ग्निरेका॑क्षरेण । प्रा॒णमु॒द॑जय॒त्तमु॒ज्जे॑षम॒श्विनौ॒द्व्य॑क्षरेणद्वि
पदो॑मनु॒ष्या॒नु॒द॑जय॒तान्ता॒नु॒ज्जे॑षं॒विष्णु॒स्त्र्य॑क्षरेण॒त्रीँल्लो॒कानु॒द॑जय॒त्ता
नु॒ज्जे॑षꣳसोम॒श्चतु॑रक्षरेण॒चतु॑ष्पदः प॒शूनु॒द॑जय॒त्तानु॒ज्जे॑षम्पू॒षाप॒ञ्चाक्ष

रेण ॥ ३१ ॥ पूषापञ्चाक्षरेण । पञ्चदिशऽउदंजयुत्ताऽउज्जेषर्ठ
सवितापडक्षरेण षड्डतूनुदंजयुत्तानुज्जेषम्मरुतंःसुप्ताक्षरेण सुप्त
ग्ग्राम्म्यान्पशूनुदंजयुंस्तानुज्जेषुम्बृहुस्पतिरुष्टाक्षरेणगायुत्रीमुदंज
युत्तामुज्जेषाम्मित्रोनवाक्षरेण ॥ ३२ ॥ मित्रो नवाक्षरेण । त्रिवृ
तुर्ठस्तोममुदंजयुत्तमुज्जेषुंव्वरुणोदशाक्षरेणव्विराजमुदंजयुत्तामुज्जेषु
मिन्द्रुऽएकादशाक्षरेणत्रिष्टुभमुदंजयुत्तामुज्जेषुंव्विश्वेदेवाद्वादशाक्षरेणु
जगंतीमुदंजयुंस्तामुज्जेषंव्वसंवस्त्रयोदशाक्षरेण ॥ ३३ ॥ व्वस
वस्त्रयोदशाक्षरेण । त्रयोदुशर्ठस्तोममुदंजयुंस्तमुज्जेषर्ठरुद्राश्च

तुर्दशाक्षरेणचतुर्दशꣳस्तोममुदजयँस्तमुज्जेषमादित्याःपञ्चदशाक्ष
रेणपञ्चदशꣳस्तोममुदजयँस्तमुज्जेषमदितिःषोडशाक्षरेणषोडशꣳ
स्तोममुदजयत्तमुज्जेषम्प्रजापतिः सप्तदशाक्षरेणसप्तदशꣳस्तो
ममुदजयत्तमुज्जेषम् ॥ ३४ ॥ [ ४ ] एषते । निर्ऋतेभागस्तं
जुषस्वस्वाहाग्निनेत्रेभ्योदेवेभ्यःपुरःसद्भ्यःस्वाहायमनेत्रेभ्योदेवे
भ्योदक्षिणासद्भ्यःस्वाहाविश्वदेवनेत्रेभ्योदेवेभ्यःपश्चात्सद्भ्यः
स्वाहामित्रावरुणनेत्रेभ्योवामरुन्नेत्रेभ्योवादेवेभ्यऽउत्तरासद्भ्यः
स्वाहासोमनेत्रेभ्योदेवेभ्यऽउपरिसद्भ्योदुवस्वद्भ्यःस्वाहा ॥ ३५ ॥
॥ १ ॥

येदेवाऽअग्निनेत्राःपुरःसदस्तेभ्यःस्वाहायेदेवायमनेत्रादक्षिणासद
स्तेभ्यःस्वाहायेदेवाविश्वदेवनेत्राःपश्चात्सदस्तेभ्यःस्वाहायेदेवा
मित्रावरुणनेत्रावामरुन्नेत्रावोत्तरासदस्तेभ्यःस्वाहायेदेवाःसोमने
त्राऽउपरिसदोदुवस्वन्तस्तेभ्यःस्वाहा ॥ ३६ ॥ अग्नेसहस्व ॥
अग्नेसहस्वपृतनाऽअभिमातीरपास्य ॥ दुष्टरस्तरन्नरातीर्वर्चो
धायज्ञवाहसि ॥ ३७ ॥ देवस्यत्वा । सवितुःप्रसवेऽश्विनोर्बा
हुभ्याम्पूष्णोहस्ताभ्याम् ॥ उपाशोर्वीर्येणजुहोमिहतꣳरक्षः
स्वाहारक्षसान्त्वावधायावधिष्मरक्षोवधिष्मामुमसौहतः ॥ ३८ ॥

[ ४ ] सुवितात्त्वांसुवानांᳬसुवतामुग्निर्गृहपतीनाᳬंसोमोवन
स्पतीनाम् ॥ बृहस्पतिर्व्वाचऽइन्द्रोज्ज्यैष्ठ्यायरुद्रःपुशुभ्योमि
त्रःसुत्योव्वरुणोधर्म्मपतीनाम् ॥ ३९ ॥ इमन्देवाऽ ॥ इम
न्देवाऽअसपुत्नᳬसुवद्ध्वम्महुतेक्षुत्रायमहुतेज्ज्यैष्ठ्यायमहुतेजानंरा
ज्युायेन्द्रस्येन्द्रियाय ॥ इममुमुष्ष्यपुत्रममुष्ष्यैपुत्रमुस्यैव्विशऽ
एषवोमीराजासोमोस्म्माकम्ब्राह्मणानाᳬराजा ॥ ४० ॥ [ २ ]
८ इतिश्रीवाजसनेयसंहितायांनवमोऽध्यायः ॥ ९ ॥ श्रीवेदपुरु
षायनमः ॥ अनुवाकसूत्रम् ॥ अपोदेवाश्चतस्रः सोमस्यत्त्विषिः

पञ्च अवेष्टाःसप्त सोमस्यत्त्वाचतस्रः इन्द्रस्यवज्रःपञ्च स्योनासिच
तस्रः सविश्रेकाश्विभ्यांचतस्रः अष्टौचतुस्त्रिंशत् ॥ हरिःॐ अपोदे
वाः ॥ अपोदेवामधुमतीरगृभ्णन्नूर्जस्वतीराजस्वश्चितानाः ॥ या
भिर्म्मित्रावरुणावभ्यषिञ्चन्याभिरिन्द्रमनयन्नत्त्यरातीः ॥ १ ॥
वृष्णऽऊर्म्मिः ॥ वृष्णऽऊर्म्मिरसिराष्ट्रदाराष्ट्रम्मेदेहिस्वा
हावृष्णऽऊर्म्मिरसिराष्ट्रदाराष्ट्रममुष्मैदेहिवृषसेनोसिराष्ट्रदाराष्ट्र
म्मेदेहिस्वाहावृषसेनोसिराष्ट्रदाराष्ट्रममुष्मैदेह्यर्त्थेतस्त्थ ॥ २ ॥
अर्त्थेतस्त्थराष्ट्रदाराष्ट्रम्मेदत्तस्वाहार्त्थेतस्त्थराष्ट्रदाराष्ट्रममुष्मैद

त्तौर्जस्वतीस्त्थराष्ट्रन्दाराष्ट्रम्मेंदत्तस्वाहौर्जस्वतीस्त्थराष्ट्रन्दाराष्ट्रममु
ष्मैंदत्तापं÷परिवाहिणीस्त्थराष्ट्रन्दाराष्ट्रम्मेंदत्तस्वाहापं÷परिवाहिणी
स्त्थराष्ट्रन्दाराष्ट्रममुष्मैंदत्तापाम्पतिरसिराष्ट्रन्दाराष्ट्रम्मेंदेहिस्वाहा
पाम्पतिरसिराष्ट्रन्दाराष्ट्रममुष्मैंदेह्यपाङ्गर्भोसिराष्ट्रन्दाराष्ट्रम्मेंदेहि
स्वाहापाङ्गर्भोसिराष्ट्रन्दाराष्ट्रममुष्मैंदेहिसूर्य्यत्त्वचसस्त्थ ॥ ३ ॥ सू
र्य्यत्त्वचसस्त्थ । राष्ट्रन्दाराष्ट्रम्मेंदत्तस्वाहासूर्य्यत्त्वचसस्त्थराष्ट्रन्दारा
ष्ट्रममुष्मैंदत्तसूर्य्यवर्च्चसस्त्थराष्ट्रन्दाराष्ट्रम्मेंदत्तस्वाहासूर्य्यवर्च्चस

संहि. स्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तमान्दांस्त्थराष्ट्रदाराष्ट्रम्मैदत्तस्वाहामा पृ.अ.
॥६३॥ न्दांस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तव्रजक्षितंस्त्थराष्ट्रदाराष्ट्रम्मैदत्तस्वा १०
हांव्रजक्षितंस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तवाशांस्त्थराष्ट्रदाराष्ट्रम्मैदत्त
स्वाहावाशांस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तशविष्ठांस्त्थराष्ट्रदाराष्ट्रम्मैदत्त
स्वाहाशविष्ठांस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तशक्करीस्त्थराष्ट्रदाराष्ट्रम्मै
दत्तस्वाहाशक्करीस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तजनभृतंस्त्थराष्ट्रदाराष्ट्र
म्मैदत्तस्वाहाजनभृतंस्त्थराष्ट्रदाराष्ट्रममु ष्मैदत्तविश्वभृतंस्त्थ ॥६३॥

दाराष्ट्रम्मेदत्तस्वाहाविश्वभृतस्त्थराष्ट्रदाराष्ट्रममुष्मैदत्तापःस्वराजं
स्त्थराष्ट्रदाराष्ट्रममुष्मैदत्त ॥ मधुमतीर्म्मधुमतीभिःपृच्यन्ता
म्महिक्षत्त्रङ्क्षत्त्रियायवन्वानाऽअनाधृष्टाःसीदतसहौजसोमहिक्षत्त्रङ्क्षत्त्रि
यायदधतीः ॥ ४ ॥ [४] शतम् ४०० ॥ सोमस्यत्त्विषिः ॥ सोमस्य
त्त्विषिरसितवेवमेत्त्विषिर्भूयात् ॥ अग्नयेस्वाहासोमायस्वाहा
सवित्रेस्वाहासरस्वत्यैस्वाहापूष्णेस्वाहाबृहस्पतयेस्वाहेन्द्रायस्वा
हाघोषायस्वाहाश्श्लोकायस्वाहाँऽशायस्वाहाभगायस्वाहार्य्यम्णे
स्वाहा ॥ ५ ॥ पवित्रेस्त्थः ॥ पवित्रेस्त्थोवैष्णव्यौसवितुर्वःप्प्रस

वऽउत्पुनाम्म्यच्छिद्रेणपवित्रेणसूर्य्यस्यरश्मिभिः ॥ अनिभृष्टमसि
व्वाचोबन्धुस्तपोजाःसोमस्यदात्रमसिस्वाहाराजस्वः ॥ ६ ॥ सध
मादोद्युम्निनीः॥सधमादोद्युम्निनीरापऽएताऽअनाधृष्टाऽअपस्योव
सानाः॥ परस्त्यासुचक्रेवरुणःसधस्थमपाꣳशिशुर्म्मातृतमास्वन्तः
॥ ७ ॥ क्षत्रस्योल्वमसिक्षत्रस्यजराय्वसिक्षत्रस्ययोनिरसिक्षत्र
स्यनाभिरसीन्द्रस्यवार्त्रघ्नमसिमित्रस्यासिवरुणस्यासित्वयायंवृ
त्रंवधेत् ॥ दृवासिरुजासिक्षुमासि ॥ पातैनम्प्राञ्चम्पातैनम्प्रत्यञ्चं
म्पातैनन्तिर्य्यञ्चन्दिग्भ्यःपात ॥८॥ आविर्म्मर्य्याः ॥ आविर्म्म

ऽस्यांऽआवित्तोऽअग्निर्गृहपतिरावित्तऽइन्द्रोवृद्धश्रवाऽआवित्तौमित्रा
वरुणौधृतव्रतावावित्तःपूषाविश्ववेदाऽआवित्तेद्यावापृथिवीविश्वशम्भु
वावावित्तादितिरुरुशर्म्मा ॥ ९ ॥ [ ५ ] अवेष्टादन्दशूकाः ॥ अवे
ष्टादन्दशूकाःप्राचीमारोहगायत्रीत्त्वावतुरथन्तरꣳसामत्रिवृत्स्तोमो
वसन्तऽऋतुर्ब्रह्मद्रविणन्दक्षिणामारोह ॥ १० ॥ दक्षिणामारो
हत्रिष्टुप्त्त्वावतुबृहत्सामपञ्चदशस्तोमोग्ग्रीष्मऽऋतुःक्षत्रन्द्रविण
म्प्रतीचीमारोह ॥ ११ ॥ प्रतीचीमारोह । जगतीत्त्वावतुवैरूपꣳसाम
सप्तदशस्तोमोवर्षाऽऋतुर्विड्द्रविणमुदीचीमारोह ॥ १२ ॥ उदीची

संहि. मारोहानुष्टुप्त्वावतुवैराजꣳसामैकविꣳशस्तोमःशरदृतुःफलन्द्रवि पू.अ.
॥६५॥ णमूर्द्ध्वामारोह ॥ १३ ॥ ऊर्द्ध्वामारोह । पङ्क्तिस्त्वावतुशाक्वररैवतेसाम १०
नीत्रिणवत्रयस्त्रिꣳशौस्तोमौहेमन्तशिशिरावृतूवर्च्चोद्द्रविणम्प्रत्यस्तन्न
मुचेःशिरः ॥ १४ ॥ सोमस्यत्त्विषिः ॥ सोमस्यत्त्विषिरसितवेव
मेत्त्विषिर्भूयात् ॥ मृत्योःपाह्योजोसिसहोस्यमृतमसि ॥ १५ ॥
हिरण्यरूपाऽउषसः ॥ हिरण्यरूपाऽउषसोविरोकऽउभाविन्द्राऽउ
दिथुःसूर्य्यश्च ॥ आरोहतंवरुणमित्त्रगर्त्तन्ततश्चक्षाथामदितिन्दि ॥६५॥
तिञ्चमित्त्रोसिवरुणोसि ॥ १६ ॥ [७] सोमस्यत्त्वाद्युम्नेनाभिषि

श्चाग्न्येर्भ्राजंसा सूर्य्यंस्य वर्च्चसेन्द्रंस्येन्द्रियेणं । क्षुत्राणांङ्क्षुत्रपंति
रेद्ध्यति दिद्यून्पाहि ॥ १७ ॥ इमन्देवाः ॥ इमन्देवाऽअसपुत्नर्ठ
सुंवद्ध्वम्महुते क्षुत्रायं महुते ज्यैष्ठ्यायं महुते जानंराज्ज्युायेन्द्रंस्येन्द्रि
यायं ॥ इममुमुष्ष्यं पुत्रममुष्ष्यै पुत्रमुस्यै विुशऽएुष वौंमीु राजुा सोमो
स्म्माकम्ब्राह्मणानार्ठराजां ॥ १८ ॥ प्रपर्व्वतस्य । वृषुभस्यं पृष्ठान्ना
वंश्चरान्ति स्वुसिंचंऽइयानाः ॥ ताऽआवंवृत्रन्नधुरागुदंक्ताऽऽअहिम्बु
ध्न्युमनुरीयंमाणाः ॥ विष्णौर्विुक्क्रमणंमसि विष्ष्णोर्विक्रान्तमसि
विष्ण्णोःक्क्रान्तमंसि ॥ १९ ॥ प्रजांपतेन । त्वदेुतान्न्युन्न्यो विश्श्वा

रूपाणिपरिताबंभूव ॥ यत्कांमास्तेजुहुमस्तन्नोऽअस्त्वयमुमुष्य
पितासावुस्यपिताह्वयꣳस्यांमुपतंयोरयीणाꣳस्वाहां ॥ रुद्रुयत्तेक्रि
विपरन्नामुतस्मिन्मꣳहुतमंस्यमेष्टमंसिस्वाहां ॥ २० ॥ [४] इ
न्द्रंस्यवज्ज्रंः ॥ इन्द्रंस्यवज्ज्रोसिमित्रावरुंणयोस्त्वाप्रशास्त्रोः प्र
शिषायुनज्मि ॥ अव्यंथायैत्त्वास्वुधायैत्त्वारिष्टोऽअर्ज्जुनोमुरुता
म्प्रसुवेनंजुयापांमुमनंसासमिन्द्रियेणं ॥ २१ ॥ मातें ॥ मातेंऽ
इन्द्रतेवुयन्तुराषाडयुंक्तासोऽअब्रह्मताविदंसाम ॥ तिष्ठारथुमाधियं
वंज्ज्रहस्तारश्मीन्देवयमसेस्वश्वान् ॥ २२ ॥ अुग्नयेंगृहपंतये ॥

अग्नयेगृहपतयेस्वाहासोमायवनस्पतयेस्वाहामरुतामोजसेस्वाहे
न्द्रस्येन्द्रियायस्वाहा ॥ पृथिविमातर्म्मामाहिᳪंसीर्म्मोऽअहन्त्वाम् ॥
॥ २३ ॥ हᳪंसःशुचिषत् ॥ हᳪंसःशुचिषद्वसुरन्तरिक्षसद्धोतावेदि
षदतिथिर्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमसदब्जागोजाऽऋतजाऽ
अद्रिजाऽऋतम्बृहत् ॥ २४ ॥ इयदसि ॥ इयदस्यायुरस्यायुर्म्म
यिधेह्यूर्गसिवर्च्चोऽसिवर्च्चोमयिधेह्यूर्गस्यूर्ज्जम्मयिधेहि ॥ इन्द्रस्य
वांवीर्य्यकृतोबाहूऽअभ्युपावहरामि ॥ २५ ॥ [ ५ ] स्योनासि ।
सुषदासिक्षत्रस्ययोनिरसि ॥ स्योनामासीदसुषदामासीदक्षत्रस्ययो

निमासीद ॥ २६ ॥ निषसाद । धृतव्व्रतोव्वरुणऽपुस्त्यास्वा ॥ साम्म्राँ
ज्ज्यायसुक्रतुः ॥ २७ ॥ अभिभूरसि ॥ अभिभूरस्येतास्तेपञ्चदि
शःकल्पन्ताम्ब्रह्मस्त्वम्ब्रह्मासिसवितासिसत्यप्प्रसवोव्वरुणो
सिसत्त्यौजाऽइन्द्रोसिव्विशौजारुद्रोसिसुशेवः ॥ बहुकारश्श्रेयस्कर
भूयस्करेन्द्रस्यव्वज्रोसितेनमेरद्ध्य ॥ २८ ॥ अग्निःपृथुः ॥ अग्निः
पृथुर्द्धर्म्मणस्प्पतिर्ज्जुषाणोऽअग्निः ॥ पृथुर्द्धर्म्मणस्प्पतिराज्ज्यस्यव्वेतु
स्वाहास्वाहाकृताःसूर्य्यस्यरश्मिभिर्य्यतद्ध्वꣳसजातानाम्मद्ध्यमे
ष्ठ्याय ॥ २९ ॥ [ ४ ] सवित्राप्प्रसवित्रा । सरस्वत्त्यावाचात्त्वष्ट्रारु

पेऽपूष्णापशुभिरिन्द्रेणास्मेबृहस्पतिनाब्रह्मणावरुणेनौजसाग्नि
नातेजसासोमेनराज्ञाविष्णुनादशम्यादेवतयाप्रसूतःप्रसर्पामि
॥ ३० ॥ [ १ ] अश्विभ्याम्पच्यस्व ॥ अश्विभ्याम्पच्यस्व
सरस्वत्यैपच्यस्वेन्द्रायसुत्राम्णेपच्यस्व ॥ वायुःपूतःपवित्रेण
प्रत्यङ्क्सोमोऽअतिस्रुतः ॥ इन्द्रस्ययुज्यःसखा ॥ ३१ ॥ कुविद
ङ्ग । यवमन्तोयवञ्चिद्यथादान्त्यनुपूर्वंवियूय ॥ इहेहैषाङ्कृणुहिभोजना
नियेबर्हिषोनमऽउक्तिंयजन्ति ॥ उपयामगृहीतोस्यश्विभ्यान्त्वा
सरस्वत्यैत्वेन्द्रायत्वासुत्राम्णे ॥ ३२ ॥ युवꣳसुरामम् ॥ युवꣳसु

रामंमश्विनानमुंचावासुरेसचा ॥ विपिपानाशुंभस्पतीऽइन्द्रङ्कम्मं
स्वावतम् ॥ ३३ ॥ पुत्रमिंवपितरौ ॥ पुत्रमिंवपितरांवश्विनोभे
न्द्रावथुःकाव्यैर्दृ सनाभिः ॥ यत्सुरामुंव्यपिंबःशचीभिःसरस्वती
त्वामघवन्नभिष्णक् ॥ ३४ ॥ [४] ॥ ८ ॥ इतिश्रीवाजसनेयसं
हितायांदशमोऽध्यायः ॥ १० ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्सू
त्रम् ॥ युञ्जानएकादश प्रत्तर्तंषोडश देवस्यत्त्वादश आपोदेवी
द्वादश आपोह्येकादश आदितिष्ट्वापञ्चआकूतिमष्टादश सप्तत्र्यशी
तिः ॥ हरिः ॐ युञ्जानःप्प्रथमम् ॥ युञ्जानःप्प्रथमम्मनस्तत्त्वायसवि

ताधियः॥ अग्नेर्ज्योतिर्निचाय्यपृथिव्याऽअध्याभरत् ॥ १ ॥ युक्तेन
मनसा । वयन्देवस्यसवितुःसवे ॥ स्वर्ग्यायशक्त्या ॥ २ ॥ युक्त्वा
यसविता । देवान्त्स्वर्यतोधियादिवम् ॥ बृहज्ज्योतिःकरिष्यतः
सवितापप्रसुवातितान् ॥ ३ ॥ युञ्जतेमनः ॥ युञ्जतेमनऽउतयुञ्जतेधि
योविप्राविप्रस्यबृहतोविपश्चितः ॥ विहोत्रादधेवयुनाविदेकऽइ
न्मुहीदेवस्यसवितुःपरिष्टुतिः ॥ ४ ॥ युजेवाम् ॥ युजेवाम्ब्रह्मपूर्व्यं
नमोभिर्विश्लोकऽएतुपथ्येवसूरेः ॥ शृण्वन्तुविश्वेऽअमृतस्यपुत्राऽ
आयेधामानिदिव्यानितस्थुः ॥ ५ ॥ यस्यप्रयाणम् ॥ यस्यप्रया

णुमन्न्वुन्यऽइद्युयुर्देवादेवस्यंमहिमानुमोजंसा ॥ यःपार्थिवानिविमु
मेसऽएतंशोरजांᳬसिदेवःसंवितामहित्वुना ॥ ६ ॥ देवंसवितः ॥ देवं
सवितुःप्प्रसुंवयुज्ञम्प्रसुंवयुज्ञपंतिम्भगाय ॥ दिव्योगंन्धुर्वःकेतुपूःकेतं
न्नःपुनातुवाचस्प्पतिर्व्वाचंन्नःस्वदतु ॥७॥ इमन्नंः ॥ इमन्नोंदेवसवितर्य्यु
ज्ञम्प्रणंयदेवाव्व्यᳬसखिविदᳬसत्राजितंन्धनुजितᳬस्वुर्ज्जितंम् ॥
ऋचास्तोमुᳬसमर्द्धयगायुत्रेणंरथन्तुरम्बृहद्गायुत्रवंर्त्तनिस्वाहां ॥ ८ ॥
देवस्यंत्त्वा । सवितुःप्प्रंसुवेश्विनोर्ब्बाहुभ्यांम्पूष्णोहस्ताभ्याम् ॥
आदंदेगायुत्रेणुच्छन्दसाङ्गिरुस्वत्पृंथिव्याःसुधस्त्थांदुग्निम्पुरी

ण्यमाङ्गिरुस्वदाभरुत्रैष्टुभेनुच्छन्दसाङ्गिरुस्वत् ॥ ९ ॥ अभ्रिर
सि । नार्यसि त्वया वुयमुग्निᳬशकेमुखानितुᳬसुधस्थुऽआ ॥ जागतेनुच्छन्दसाङ्गिरुस्वत् ॥ १० ॥ हस्तऽआधाय । सविता बिभ्रुदभ्रिᳬहिरण्ययीम् ॥ अुग्नेर्ज्योतिर्निचाय्य पृथिव्याऽअद्ध्याभरुदानुष्टुभेनुच्छन्दसाङ्गिरुस्वत् ॥ ११ ॥ [ ११ ] प्रतूर्त्तवाजिन् ॥ प्रतूर्त्तवाजिन्नाद्रवुवरिष्ठामनुसंवतम् ॥ दिवितुजन्मपरममुन्तरिक्षेतवुनाभिᳶपृथिव्यामधियोनिरित् ॥ १२ ॥ युञ्जाथाᳬरासभम ॥ युञ्जाथाᳬरासभंयुवमस्मिन्यामेवृषण्वसू ॥ अग्निम्भरन्तमस्मुयुम् ॥ १३ ॥ योगेयो

गेतुवस्त्तंरम् ॥ योगेंयोगेतुवस्त्तंरुंव्वाजेवाजेंहवामहे॥सखायुऽइन्द्रंमूत
ये ॥ १४ ॥ प्रतूर्व्वन्नेहिं ॥ प्रतूर्व्वन्नेह्यवक्रामुन्नशंस्तीरुद्रस्युगाणंपत्त्यम्म
योभूरेहिं ॥ उर्व्वुन्तारिक्षुंव्वीहिस्वुस्तिगंव्यूतिुरभंयानिकृण्णवन्पूष्ष्णा
सुयुजासुह ॥ १५ ॥ पृथिव्याःसुधस्त्थात् ॥ पृथिव्याःसुधस्त्थादुग्निं
म्पुंरीष्ष्यमङ्गिरुस्वदाभरुाग्निम्पुंरीष्ष्यमङ्गिरुस्वदच्छेमोुाग्निम्पुंरी
ष्ष्यमङ्गिरुस्वद्भरिष्ष्यामः ॥ १६ ॥ अन्वुग्निः ॥ अन्वुग्निरुषसा
मग्ग्रंमक्ख्युदन्वहानिप्प्रथमोजातवेदाः ॥ अनुसूर्य्यंस्यपुरुत्राचंर
श्म्मीननुद्यावापृथिवीऽआततन्थ ॥ १७ ॥ आगत्त्यंव्वाजी ॥ आगत्त्य

वाज्ज्यद्धांनुꣳसहांमृधोविधूनुते ॥ अग्नेꣳसुधस्त्थेमहतिचक्षुंषा
निचिंकीषते ॥ १८ ॥ आक्रम्म्यंवाजिन् ॥ आक्रम्म्यंवाजिन्पृ
थिवीमग्निमिच्छरुचात्वम् ॥ भूम्म्यांवृत्त्वायंनोब्रूहियतुःखनें
मुतंवयम् ॥ १९ ॥ द्यौस्तें । पृष्ठम्पृथिवीसुधस्त्थंमात्त्मान्त
रिक्षꣳसमुद्रोयोनिः ॥ विख्यायचक्षुंषात्त्वमभितिंष्ठपृतन्न्युतः
॥ २० ॥ उत्क्राम । महतेसौभंगायास्म्मादास्त्थानांद्रविणोदावां
जिन् ॥ वयꣳस्यांमसुमतौपृथिव्याऽअग्निङ्खनंन्तऽउपस्त्थेऽअस्याः
॥ २१ ॥ उदंक्रमीत् ॥ उदंक्रमीद्द्रविणोदावाज्ज्यर्वाकःसुलोकꣳसु

कुंतम्पृथिव्याम् ॥ ततः॑खनेमसुप्प्रतीकमुग्निश्वोरुहाणाऽआधि
नाकंमुत्तमम् ॥ २२ ॥ आत्त्वां । जिघर्म्मिमनंसाघृतेनंप्प्रतिक्षियं
न्तुम्भुवनानिविश्श्वा ॥ पृथुन्तिरश्चावयंसाबृहन्तुंव्यचिष्ठुमन्नैरभु
सङ्दृशानम् ॥ २३ ॥ आविश्वतः । प्प्रुत्त्यञ्चञ्जिघर्म्म्यरक्षसाम
नंसातज्जुषेत ॥ मर्य्यश्श्रीस्प्पृहयद्वर्णोऽअुग्निर्न्नाभिमृशेतुन्न्वाजंभु
राणः ॥ २४ ॥ परिवाजंपतिः ॥ परिवाजंपतिंकुविरुग्निर्हव्यान्यंक्र
मीत् ॥ दधुद्रत्त्नांनिदाशुषे ॥ २५ ॥ परिंत्त्वाग्नेपुरंवुयंविप्प्रंसह
स्यधीमहि ॥ धृषद्वर्णन्दिवेदिवेहन्तारम्भङ्गुरावंताम् ॥ २६ ॥ त्त्व

मंग्ने । द्युभिस्त्वमांशुशुक्षणिस्त्वमुद्भ्यस्त्वमश्म्मंनुस्प्परिं ॥ त्वं
वनेंब्भ्युस्त्वमोषंधीब्भ्युस्त्वन्नृणान्नृंपतेजायसेशुचिंः ॥ २७ ॥
[ १६ ] देवस्यंत्त्वा । सवितुःप्प्रंसुवेश्श्विनोंर्ब्बाहुब्भ्यांम्पूष्णोहस्ता
ब्भ्याम् ॥ पृथिव्याःसुदस्त्थांदुग्निम्पुरीष्ष्यमाङ्गिरुस्वत्त्वंनामि ॥
ज्योतिष्म्मन्तन्त्वाग्ग्नेसुप्प्रतीकुमजंस्त्रेणभानुनादीद्यंतम् ॥ शिवम्म्प्र
जाब्भ्योहिंर्ठसन्तम्पृथिव्याःसुधस्त्थांदुग्निम्पुरीष्ष्यमाङ्गिरुस्वत्त्व
नामः ॥ २८ ॥ अपाम्पृष्ठम॥ अपाम्पृष्ठमंसियोनिरग्ग्नेःसंमुद्रमाभितः
पिन्वंमानम् ॥ वर्द्धमानोमुहाँ२।ऽआचपुष्क्करेदिवोमात्रंयावारिम्म्णा

प्प्रथस्व ॥ २९ ॥ शर्म्मच ॥ शर्म्मचस्त्थोवर्म्मचस्त्थोच्छिद्द्रेबहुले
ऽउभे ॥ व्यचस्वतीसंव्वसाथाम्भृतमग्निम्पुरीष्ष्यम् ॥ ३० ॥ संव्व
साथाम् ॥ संव्वसाथाᳬस्वर्व्विदासमीचीऽउरसात्त्मना ॥ अग्निम
न्तर्ब्भरिष्ष्यन्तीज्ज्योतिष्ष्मन्तमजस्रमित् ॥ ३१ ॥ पुरीष्ष्योसि ।
व्विश्वभराऽअथर्व्वात्त्वाप्प्रथमोनिरमन्थदग्ने ॥ त्त्वामग्नेपुष्करादध्य
थर्व्वानिरमन्थत ॥ मूर्द्ध्नोव्विश्वस्यवाघतः ॥ ३२ ॥ तमुत्त्वा । दध्य
ङ्ङृषिः पुत्रऽईधेऽअथर्व्वणः ॥ वृत्रहणम्पुरन्दरम् ॥३३॥ तमुत्त्वा । पा
त्थ्योवृषासमीधेदस्युहन्तमम ॥ धनञ्जयᳬरणेरणे ॥ ३४ ॥ सीदहो

तः । सीदंहोतुःस्वऽउंलोकेचिकित्त्वान्त्सादयायज्ञꣳसुकृतस्ययोना ॥
देवावीर्देवान्हविषायजास्यग्नेबृहद्यजमानेवयोधाः ॥ ३५ ॥ निहो
ता । होतृषदनेविदानस्त्वेषोदीदिवाँ२ ऽअसदत्सुदक्षः ॥ अदब्ध
व्रतप्रमतिर्वसिष्ठःसहस्रम्भरःशुचिजिह्वोऽअग्निः ॥ ३६ ॥ सꣳसीद
स्व ॥ सꣳसीदस्वमहाँ२ ऽअसिशोचस्वदेववीतमः ॥ विधूममग्नेऽ
अरुषम्मियेध्यसृजप्रशस्तदर्शतम् ॥ ३७ ॥ [ १० ] अपोदेवीः ॥
अपोदेवीरुपसृजमधुमतीरयक्ष्मायप्रजाभ्यः ॥ तासामास्थानादु
ज्जिहतामोषधयःसुपिप्पलाः ॥ ३८ ॥ सन्ते । वायुर्मातरिश्वादधा

तूत्तानायाहृदंयुंव्याद्दिकंस्त्तम् । योदेवानुाश्चरंसिप्प्राणथेनुकस्म्मै
देववपंडस्त्तुतुब्भ्यंम् ॥ ३९ ॥ सुजातोज्ज्योतिंषा । सुहशरम्मुंवरूंथु
मासंदत्त्स्व÷ ॥ व्वासोऽअग्ग्नेव्विश्श्वरूंपुर्ठसंव्ययस्व्वविभावसो ॥ ४० ॥
उदुतिष्ठ । स्वद्धरावांनोदेव्याधिया ॥ दृशेचंभासाबृहुतासुंशुक्कनिरा
ग्गेयाहिसुशस्त्तिभिं÷ ॥ ४१ ॥ ऊर्द्ध्वऽऊषुणं÷ ॥ ऊर्द्ध्वऽऊषुणंऽऊतये
तिष्ठांदेवोनसंविता ॥ ऊर्द्धोव्वाजंस्स्यसनितायदुञ्जिभिर्व्वाघद्भिर्व्विह्वयां
महे ॥ ४२ ॥ सजातः । सजातोगब्भ्भौंअसिरोदंस्योरग्ग्नेचारुर्व्वि
मृंतऽओषधीषु ॥ चित्रःशिशुंपरितमांर्ठस्यक्तूप्प्रमातृब्भ्योऽअ

कनिक्क्रदद्द्वाः ॥ ४३ ॥ स्थिरोभव । वीड्वङ्गऽआशुर्भववाज्ज्यर्वन् ॥
पृथुर्भवसुषदस्त्वमग्नेः पुरीषवाहणः ॥ ४४ ॥ शिवोभव । प्प्रजा
ब्भ्योमानुषीब्भ्यस्त्वमङ्गिरः ॥ माद्यावापृथिवीऽअभिशोचीम्मान्त
रिक्षम्माव्वनस्प्पतीन् ॥ ४५ ॥ प्रैतु । व्वाजीकनिक्क्रदन्नानदद्द्रासभः प
त्त्वा ॥ भरन्नग्निम्पुरीष्ष्यम्मापाद्यायुषः पुरा ॥ वृषाग्निम्वृषणम्भ
रन्नपाङ्गर्भᳪ समुद्रियम् । अग्नऽआयाहिव्वीतये ॥ ४६ ॥ ऋतᳪ सु
त्त्यमृतᳪ सत्त्यमग्निम्पुरीष्ष्यमङ्गिरस्वद्भरामः ॥ ओषधयः प्प्रतिमो
दद्धमग्निमेतᳪ शिवमायन्तमब्भ्यत्रयुष्ष्माः ॥ व्व्यस्यन्विश्श्वाऽअ

निंराऽअमींवानिषीदंन्नोऽअपंदुर्म्मतिञ्जंहि ॥ ४७ ॥ ओषधयुऽप्प्र
तिं ॥ ओषधयुऽप्प्रातिंगृब्भ्णीतुपुष्पवंतीऽसुपिप्पुलाः ॥ अयंब्बोग
र्ब्भऽऋत्त्वियः प्प्रत्क्क्ऽसुधस्त्थमासंदत् ॥ ४८॥ विपाजंसा । पृथुना
शोशुंचानोबाधंस्वद्द्विषोरुक्षसोऽअमींवाः ॥ सुशर्म्मणोबृहतःशर्म्म
णिस्यामुग्ग्नेरहऽसुहवंस्युप्प्रणींतौ ॥ ४९ ॥ [ १२ ] आपोहिष्ठा
मंयोभुवुस्तानंऽऊर्ज्जेदंधातन ॥ मुहेरणांयुचक्षंसे ॥ ५० ॥ योवं
शिवतंमोरसुस्तस्यंभाजयतेहनंः ॥ उशुतीरिवमातरंः ॥ ५१ ॥
तस्म्माऽअरम् ॥ तस्मांऽअरङ्गमामवोयस्युक्षयांयुजिन्वंथ । आ

पांजुनयथाचनः ॥ ५२ ॥ मित्रःसुर्ठसृज्ज्य । पृथिवीम्भूमिंञ्चुज्ज्यो
तिषासुह ॥ सुजातञ्जातवेदसमयुक्ष्मायंत्त्वासर्ठसृजामिप्प्रुजाब्भ्यः
॥ ५३ ॥ रुद्राःसुर्ठसृज्ज्य । पृथिवीम्बृहज्ज्योतिःसमीधिरे ॥ ते
षाम्भानुरजस्त्रऽइच्छुक्रोदेवेषुरोचते ॥ ५४ ॥ सर्ठसृष्टांव्वसुभिः ॥
सर्ठसृष्टांव्वसुभीरुद्रैर्द्धीरैःकम्मुण्ण्याम्मृदम् ॥ हस्ताब्भ्याम्मृद्वीङ्कृ
त्त्वासिनीवालीकृणोतुताम् ॥ ५५ ॥ सिनीवालीसुकपर्द्दा ॥ सुकुरी
रास्वौपुशा ॥ सातुब्भ्यंमदितेमह्योखान्दधातुहस्त्तयोः ॥ ५६ ॥
उखाङ्कृणोतु। शक्त्याबाहुब्भ्यामदितिर्द्धिया ॥ मातापुत्त्रंय्यथोपस्त्थे

सा॒ग्निम्बि॑भर्तु॒ गर्भ॑ऽआ ॥ मु॒खस्य॒ शिरो॑ऽसि ॥ ५७ ॥ व॒सव॑स्त्वा ।
कृण्वन्तु गाय॒त्रेण॒ च्छन्द॑साऽङ्गिर॒स्वद्ध्रु॒वासि॑ पृथि॒व्य॒सि धा॒रया॒ मयि॑ प्र॒
जाᳬं रा॒यस्पोषं॑ गौप॒त्यᳬं सु॒वीर्य॑ᳬं सजा॒तान्यज॑मानाय रु॒द्रास्त्वा॑
कृण्वन्तु॒ त्रैष्टु॑भेन॒ च्छन्द॑साऽङ्गिर॒स्वद्ध्रु॒वास्य॒न्तरि॑क्षमसि धा॒रया॒ मयि॑
प्र॒जाᳬं रा॒यस्पोषं॑ गौप॒त्यᳬं सु॒वीर्य॑ᳬं सजा॒तान्यज॑मानायादि॒त्या
स्त्वा॑ कृण्वन्तु॒ जाग॑तेन॒ च्छन्द॑साऽङ्गिर॒स्वद्ध्रु॒वासि॒ द्यौर॑सि धा॒रया॒ मयि॑
प्र॒जाᳬं रा॒यस्पोषं॑ गौप॒त्यᳬं सु॒वीर्य॑ᳬं सजा॒तान्यज॑मानाय॒ विश्वे॑ त्वा
दे॒वा वै॑श्वान॒राः कृ॑ण्व॒न्त्वानु॑ष्टुभेन॒ च्छन्द॑साऽङ्गिर॒स्वद्ध्रु॒वासि॒ दिशो॑ऽसि धा॒

रय्यामयिंप्प्रजाᳪंरायस्प्पोषंङ्गौपत्त्यᳪंसुवीर्य्यᳪंसजातन्न्यजंमानाय॥
॥ ५८ ॥ अदित्त्यैरास्ना ॥ अदित्त्यैरास्न्नास्यदितिष्टेबिलंङ्गृ
भ्भ्णातु ॥ कृत्त्वायसामहीमुखाम्मृन्मयींय्योनिमग्ग्नये ॥ पुत्रेब्भ्यः
प्प्रायच्छददितिःश्रपयानिति ॥ ५९ ॥ वसवस्त्वा ॥ धूपयन्तुगाय
त्त्रेणच्छन्दसाङ्गिरस्वद्रुद्द्रास्त्वाधूपयन्तुत्रैष्टुभेनच्छन्दसाङ्गिरस्वदादि
त्त्यास्त्वाधूपयन्तुजागतेनच्छन्दसाङ्गिरस्वद्विश्वेत्त्वादेवावैश्वानराधू
पयन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वदिन्द्रस्त्वाधूपयतुवरुणस्त्वाधूपयतु
विष्ण्णुस्त्वाधूपयतु ॥ ६० ॥ [ ११ ] अदितिष्ट्वा ।

देवीर्विंश्वदेव्यावतीपृथिव्याꣳसुधस्त्थेऽअङ्गिरुस्वत्त्खनत्त्ववटदेवानां
न्त्वापत्नीर्देवीर्विंश्वदेव्यावतीꣳपृथिव्याꣳसुधस्त्थेऽअङ्गिरुस्वद्दंधतूखे
धिषणास्त्त्वादेवीर्विंश्वदेव्यावतीꣳपृथिव्याꣳसुधस्त्थेऽअङ्गिरुस्वदुभी
न्धतामुखेग्वरूत्रीष्ट्वादेवीर्विंश्वदेव्यावतीꣳपृथिव्याꣳसुधस्त्थेऽअङ्गिर
स्वच्छ्रपयन्तूखेग्नास्त्त्वांदेवीर्विंश्वदेव्यावतीꣳपृथिव्याꣳसुधस्त्थेऽअ
ङ्गिरुस्वत्त्पंचन्तूखेजनंयुस्त्त्वाच्छिन्नपत्राक्षदेवीर्विंश्वदेव्यावतीꣳपृथि
व्याꣳसुधस्त्थेऽअङ्गिरुस्वत्त्पंचन्तूखे ॥ ६१ ॥ मित्रस्यंचर्ष
णीधृतंः ॥ मित्रस्यंचर्षणीधृतोवोंदेवस्यंसानुसि ॥ द्युम्नाश्च्रि

त्र्यश्रंवस्तमम् ॥ ६२ ॥ देवस्त्वा । सवितोद्वंपतुसुपाणिः
स्वङ्गुरिःसुबाहुरुतशक्त्या ॥ अव्यथमानापृथिव्यामाशादिशऽआ
पृण ॥ ६३ ॥ उत्थायबृहती । भवोदुत्तिष्ठध्रुवात्त्वम् ॥ मित्रैतान्तऽ
उखाम्परिददाम्यभित्त्याऽएषामाभेदि ॥ ६४ ॥ वसवस्त्वा । च्छृ
न्दन्तुगायत्रेणच्छन्दसाङ्गिरस्वद्रुद्रास्त्वाच्छृन्दन्तुत्रैष्टुभेनच्छन्दसा
ङ्गिरस्वदादित्यास्त्वाच्छृन्दन्तुजागतेनच्छन्दसाङ्गिरस्वद्विश्वेत्त्वादे
वावैश्वानराऽआच्छृन्दन्त्वानुष्टुभेनच्छन्दसाङ्गिरस्वत् ॥ ६५ ॥ [५]
आकूतिमग्निम् ॥ आकूतिमग्निम्प्रयुजᳪं स्वाहामनोमेधामग्निम्प्र

युजꣳस्वाहाचित्तंविज्ञातमग्निम्प्रयुजꣳस्वाहावाचोविधृतिमग्निम्प्र
युजꣳस्वाहाप्रजापतयेमनवेस्वाहाग्नयेवैश्वानरायस्वाहा ॥ ६६ ॥
विश्वोदेवस्य ॥ नेतुर्म्मर्त्तोवुरीतसुख्यम् ॥ विश्वोरायऽइषु
ध्यतिद्युम्नंवृणीतपुष्यसेस्वाहा ॥ ६७ ॥ मासु । भित्थामासु
रिषोम्वंधृष्णुवीरयस्वसु ॥ अग्निश्चेदङ्करिष्यथः ॥ ६८ ॥ दृꣳह
हस्वदेवि । पृथिविस्वस्तयऽआसुरीमायास्वधयाकृतासि ॥ जुष्ट
न्देवेभ्यऽइदमस्तुहव्यमरिष्टात्वमुदिहियज्ञेऽअस्मिन् ॥ ६९ ॥
द्रन्नःसर्प्पिरासुतिःप्रत्नोहोतावरेण्यः ॥ सहसस्पुत्रोऽअद्भुतः ॥

॥ ७० ॥ शतम् ॥ ५०० ॥ परस्याऽअधि । संवतोवराँ२ऽअभ्या
तर ॥ यत्राहमस्मिताँ२ऽअव ॥ ७१ ॥ परमस्याःपरावतः ॥ प
रमस्याःपरावतोरोहिदश्वऽइहागहि ॥ पुरीष्यःपुरुप्रियोग्नेत्व
न्तरामृधः ॥ ७२ ॥ यदग्ने ॥ यदग्नेकानिकानिचिदातेदारूणिद
ध्मसि ॥ सर्वन्तदस्तुतेघृतन्तज्जुषस्वयविष्ठ्य ॥ ७३ ॥ यदत्ति ॥ यद
त्त्युपजिह्विकायद्वम्रोऽअतिसर्पति ॥ सर्वन्तदस्तुतेघृतन्तज्जुषस्व
यविष्ठ्य ॥ ७४ ॥ अहरहरप्रयावम् ॥ अहरहरप्रयावम्भरन्तोश्वा
येवतिष्ठतेघासमस्मै ॥ रायस्पोषेणसमिषामदन्तोग्नेमातेप्रतिवे

शारिपाम ॥ ७५ ॥ नाभांपृथिव्याः । संमिधानेऽअग्नौरायस्पोषा
यबृहतेहवामहे ॥ इरम्मुदम्बृहदुक्थंयजंत्रजेतारमग्निम्पृतनासुसा
सहिम् ॥ ७६ ॥ याःसेनाः ॥ याःसेनांऽअभीत्वरीराव्याधिनीरुग
णाऽउत ॥ येस्तेनायेचतस्कंरास्तांस्तेऽअग्नेपिंदधाम्यास्ये॥७७॥
दंष्ट्राभ्याम्मलिम्लून् ॥ दंष्ट्राभ्याम्मलिम्लूञ्जम्भ्यैस्तस्कराँ
ऽउत ॥ हनुभ्यांस्तेनान्भगवस्तांस्त्वङ्खादसुखांदितान् ॥
॥ ७८ ॥ येजनेषु । मलिम्लवस्तेनासस्तस्करावने ॥ येकक्षेष्वघा
यवस्तांस्तेंदधामिजम्भंयोः ॥ ७९ ॥ योऽअस्मभ्यंम् । योअस्मम

ब्भ्यमरातीयाद्यश्चनोद्वेषंतेजनं॑ ॥ निन्दाद्योऽअस्मान्धिप्प्साञ्चुस
र्व्वन्तम्भस्म्मसाकुरु ॥ ८० ॥ सꣳशितम्मे ॥ सꣳशितम्मेब्रह्मसꣳ
शितंव्वीर्य्यम्बलम् ॥ सꣳशितङ्क्षत्रञ्जिष्णुयस्याहमस्म्मिपुरोहितः ॥
॥ ८१ ॥ उदेषाम् ॥ उदेषाम्बाहूऽअतिरमुद्वर्च्चोऽअथोबलम् ॥ क्षिणो
मिब्रह्मणामित्रानुन्नयामिस्वाँ२ऽअहम् ॥८२॥ अन्नपतेन्नस्य। नोदे
ह्यनमीवस्यशुष्मिणः। प्रप्रदातारन्तारिषऽऊर्ज्जन्नोधेहिद्विपदेचतु
ष्प्पदे ॥ ८३ ॥ [ १८ ] इतिशुक्लयजुस्संहितायामेकादशोऽध्यायः ॥
॥ ११ ॥ ॥ श्रीवेदपुरुषायनमः ॥ ॥ अनुवाक्सूत्रम् ॥ इशानः

सप्तदश दिवस्पारि द्वादश समिधाग्नि पञ्चदश आपेत सप्तदशआसु
न्वन्तं त्रयोदश याओषधीः सप्तविꣳशतिः मामाषोडश सप्तसप्तद
शꣳशतम् ॥ हरिः ॐ दृशानोरुक्मः ॥ दृशानोरुक्मऽउर्व्याव्यद्यौद्दुर्म्मर्
षमायुःश्रियेरुचानः ॥ अग्निरमृतोऽअभवद्वयोभिर्यदेनन्द्यौरजन
यत्सुरेताः ॥ १ ॥ नक्तोषासासमनसा । विरूपेधापयेतेशिशुमेकꣳस
मीची ॥ द्यावाक्षामारुक्मोऽअन्तर्विभातिदेवाऽअग्निन्धारयन्द्रविणो
दाः ॥२॥ विश्वारूपाणि ॥ विश्वारूपाणिप्रतिमुञ्चतेकविःप्रासावी
द्भद्रंद्विपदेचतुष्पदे । विनाकमख्यत्सवितावरेण्योनुप्रयाणमुषसो

व्विराजति ॥ २ ॥ सुपर्णोऽसि । गुरुत्माँस्त्रिवृत्तेशिरो गायत्रञ्चक्षुर्बृहद्र
थन्तरेपक्षौ ॥ स्तोमऽआत्माच्छन्दाᳬंस्यङ्गानियजूᳬंषिनाम ॥ सा
मंतेतनूर्व्वामदेव्यंयज्ञायज्ञियम्पुच्छन्धिष्ण्याःशफाः ॥ सुपर्णोऽसि
गुरुत्मान्दिवङ्गच्छस्वःपत ॥ ४ ॥ विष्णोःक्रमः ॥ विष्णोःक्र
मोऽसिसपत्नहागायत्रञ्छन्दऽआरोहपृथिवीमनुविक्रमस्वविष्णोः
क्रमोऽस्यभिमातिहात्रैष्टुभञ्छन्दऽआरोहान्तरिक्षमनुविक्रमस्ववि
ष्णोःक्रमोऽस्यरातीयतोहन्ताजागतञ्छन्दऽआरोहदिवमनुविक्रम
स्वविष्णोःक्रमोऽसिशत्रूयतोहन्तानुष्टुभञ्छन्दऽआरोहदिशोऽनुविक्रम

श्वप्पस्न्याव्वुश्श्वतुस्प्पारं ॥ १० ॥ आत्त्वा । हाषमुन्तरभूद्ध्रुव
स्तिष्ठाविचाचलिः ॥ व्विशस्त्त्वासर्व्वावाञ्छन्तुमात्त्वद्राष्ट्रमधिभ्र्रश
त् ॥ ११ ॥ उदुत्तमम् ॥ उदुत्तमँव्वरुणपाशमस्म्मदवाधमंविमद्ध्य
मँश्श्रथाय । अथाव्वयमादित्त्यव्व्रतेतवानागसोऽअदितयेस्याम ॥
॥ १२ ॥ अग्ग्रेबृहन् ॥ अग्ग्रेबृहन्नुषसामूर्द्ध्वोऽअस्त्थान्निर्ज्जगन्न्वा
न्तमसोज्ज्योतिषागात् ॥ अग्ग्निर्भानुनारुशताास्वङ्गऽअजातोव्वि
श्वासद्मान्न्यप्प्राः ॥ १३ ॥ हुँसःशुचिषत् ॥ हुँसःशुचिषद्व
सुरन्तरिक्षसद्धोताव्वेदिषदतिथिर्द्दुरोणसत् ॥ नृषद्वरसदृतसद्व्योमस

दुऽजागोजाऽऋतजाऽअद्रिजाऽऋतम्बृहत् ॥ १४ ॥ सीदत्त्वम् । सी
दत्त्वम्मातुरस्याऽउपस्त्थेविश्वान्यग्नेवयुनानिविद्वान् । मैनान्त
पंसामार्च्चिषाभिशोचीरन्तरंस्याᳪ शुक्रज्ज्योतिर्विभाहि ॥ १५ ॥
अन्तरग्ने । रुचात्त्वमुखायाःसदने स्वे ॥ तस्यास्त्वᳪ हरसातपञ्जा
तवेदःशिवोभव ॥ १६ ॥ शिवोभूत्त्वा । मह्यमग्नेऽअथोसीदशिव
स्त्त्वम् ॥ शिवाःकृत्त्वादिशःसर्वाःस्वंय्योनिमिहासदः ॥ १७ ॥
[ १७ ] दिवस्प्परि ॥ प्प्रथमञ्जज्ञेऽअग्निरस्म्मद्द्वितीयम्परिजातवे
दाः ॥ तृतीयमप्सुनृमणाऽअजस्रमिन्धानऽएनञ्जरतेस्वाधीः ॥

॥ १८ ॥ व्विद्म्मातें । अग्ग्नेत्त्रेधात्त्रयाणिंव्विद्म्मातुधामुव्विभृंतापुरुत्त्रा ॥
व्विद्म्मातुनामंपरुम्ङ्गुहायद्व्विद्म्मातमुत्त्सुंत्त्यतंऽआजुगन्त्थं ॥ १९ ॥ सु
मुद्द्रेत्त्वा ॥ नृम्णाऽअप्प्स्वुन्तर्न्नृचक्षांऽईधेदिवोऽअंग्ग्नऽऊर्धन् ॥ तृतीयें
त्त्वारजांसितस्त्थिवाछंसंमुपामुपस्त्थेंमाहिषाऽअंवर्द्धन् ॥ २० ॥ अ
क्रेन्ददुग्ग्निः ॥ अक्रेन्ददग्ग्निस्त्तुनयंन्निवद्यौःक्षामारेरिंहद्वीरुधंःसम
ञ्जन् ॥ सुद्योजंज्ञानोव्विहीमिद्धोऽअक्ख्युदारोदंसीभानुनांभात्त्यन्तः
॥ २१ ॥ श्रीणामुंदारः ॥ श्रीणामुंदारोधुरुणोरयीणाम्मंनीषाणा
म्प्रार्प्पणऽंसोमंगोपाः ॥ व्वसुंःसूनुःसहंसोऽअप्प्सुराजाव्विभात्त्यग्ग्रं

ऽउपसामिधानः ॥ २२ ॥ विश्वस्यकेतुः ॥ विश्वस्यकेतुर्भुवन
स्यगर्भऽआरोदसीऽअपृणाज्जायमानः । वीडुञ्चिदद्रिमभिनत्पराय
न्नायदग्निमयजन्तपञ्च ॥ २३ ॥ उशिक्पावकः ॥ उशिक्पाव
कोऽअरतिःसुमेधामर्त्तेष्वग्निरमृतोनिधायि ॥ इयर्त्तिधूममरुषम्भ
रिभ्रदुच्छुक्रेणशोचिषाद्यामिनक्षन् ॥ २४ ॥ दृशानोरुक्मः ॥ दृ
शानोरुक्मऽउर्व्याव्यद्यौद्दुर्मर्षमायुःश्रियेरुचानः ॥ अग्निरमृतोऽ
अभवद्वयोभिर्यदेनन्द्यौरजनयत्सुरेताः ॥ २५ ॥ यस्ते । अद्यकृण
वद्भद्रशोचेपूपन्देवघृतवन्तमग्ने ॥ प्रतन्नयप्रतरंवस्योऽअच्छाभि

सुम्म्नन्दुेवभंक्तंयविष्ठ ॥ २६ ॥ आतम् ॥ आतम्भंजसौश्श्रवुसेष्व
ग्नऽउुक्थऽउंक्थुऽआभंजशुस्यमांने ॥ प्प्रियःसूर्य्योप्प्रियोऽअग्न्ना
भंवात्त्युज्जातेनंभिनदुदुज्जनित्त्वैः ॥ २७ ॥ त्त्वामंग्ग्ने ॥ त्त्वामंग्ग्ने
यजंमानाऽअनुद्यून्विश्श्वावसुंदधिरेवार्य्याणि ॥ त्त्वयांसुहद्द्रविण
मिुच्छमांनाव्व्रजङ्गोमंन्तमुशिजोविवंव्व्रुः ॥ २८ ॥ अस्त्ताव्युग्ग्निः ।
अस्त्ताव्युग्ग्निन्नुराश्शुशेवोवैश्श्वानरऽऋषिभिःसोमंगोपाः ॥ अुद्वेषे
द्यावांपृथिवीहुवेमुदेवांधुत्तरयिमुस्म्मेसुवीरंम् ॥ २९ ॥ [ १२ ] सु
मिधाग्ग्निम् ॥ सुमिधाग्ग्निन्दुंवस्यत घृतैर्वोधयुतातिंथिम् ॥ आस्म्मि

र्हुव्याजुंहोतन ॥ ३० ॥ उदुंत्वा ॥ उदुंत्त्वाविश्वेदेवाऽअग्ग्नेभर
न्तुचित्तिभिः ॥ सनोंभवशिवस्त्त्वᳬसुप्प्रतीकोविभावसुः ॥ ३१ ॥
प्रेत् ॥ प्रेदंग्ग्नेज्ज्योतिष्म्मान्याहिशिवेभिरर्च्चिभिष्ट्वम् ॥ बृहद्भिर्भानु
भिर्भासुन्नमाहिᳬसीस्त्तन्न्वाप्प्रजाः ॥ ३२ ॥ अक्रन्ददग्ग्निः ॥ अक्र
न्ददग्ग्निस्त्तनयन्न्निवद्यौःक्षामारेरिहद्वीरुधःसमञ्जन् ॥ सद्योजज्ञा
नोविहीमिद्धोऽअक्ख्यदारोदसीभानुनाभात्यन्तः ॥ ३३ ॥ प्रप्प्रा
यम् ॥ प्रप्प्रायमग्ग्निर्भरतस्यशृण्ण्वेवियत्त्सूर्य्योनरोचतेबृहद्भाः ॥
अभियःपूरुम्पृतनासुतस्त्थौदीदायदैव्योऽअतिथिःशिवोनः ॥ ३४॥

आपोदेवीः ॥ आपोदेवीःप्प्रतिगृब्भ्णीतुभस्म्मैतत्स्योनेकृणुद्ध्वᳬसु
रभाऽउलोके ॥ तस्म्मैनमन्ताञ्जनयःसुपत्त्नीर्म्मातेवपुत्त्रम्बिभृता
प्स्वेनत् ॥३५॥ अप्स्वग्ग्ने ॥ अप्स्वग्ग्नेसधिष्ट्वसौषधीरनुरुद्ध्य
से ॥ गर्ब्भेसञ्जायसेपुनः ॥ ३६ ॥ गर्ब्भोऽअसि ॥ गर्ब्भोऽअस्योषधी
नाङ्गर्ब्भोवनस्प्पतीनाम् ॥ गर्ब्भोविश्वस्यभूतस्याग्ग्नेगर्ब्भोऽअपा
मसि ॥ ३७ ॥ प्रसद्यभस्म्मना ॥ प्रसद्यभस्म्मनायोनिमपश्चपृ
थिवीमग्ग्ने ॥ सᳬसृज्ज्यमातृभिष्ट्वञ्ज्योतिष्म्मान्पुनरासदः ॥ ३८ ॥
पुनरासद्य ॥ पुनरासद्यसदनमपश्चपृथिवीमग्ग्ने ॥ शेषेमातुर्य्यथो

परस्त्थेन्तरंस्याꣳशिवतमः ॥ ३९ ॥ पुनरूर्जा । निवर्त्तस्वपुनरग्न
ऽइषायुषा ॥ पुनर्न्नःपाह्यꣳहसः ॥ ४० ॥ सहरय्या । निवर्त्तस्वा
ग्नेपिन्वस्वधारया ॥ विश्वप्प्स्न्याविश्वतस्प्परि ॥ ४१ ॥ बोधा
मे । ऽअस्यवचसोयविष्ठमꣳहिष्ठस्यप्प्रभृतस्यस्वधावः ॥ पीयति
त्त्वोऽअनुत्त्वोगृणातिवन्दारुष्टेतन्न्वं वन्देऽअग्ने ॥ ४२ ॥ सबोधि ।
सूरिम्मघवावसुपतेवसुदावन् ॥ युयोद्ध्यस्म्मद्द्वेषाꣳसिविश्वकर्म्म
णेस्वाहा ॥ ४३ ॥ पुनस्त्वा । दित्यारुद्द्रावसवःसमिन्धताम्पुनर्ब्र
ह्माणोवसुनीथयज्ञैः ॥ घृतेनत्त्वन्तन्न्वँवर्द्धयस्वसत्त्याःसन्तुयजमा

नस्युकामाः ॥ ४४ ॥ [ १५ ] अपेत ॥ अपेतुवीतुविचसर्प्पतातोयेत्र
स्त्थपुराणायेचुनूतनाः ॥ अदांद्यमोवुसानम्पृथिव्याऽअक्रन्निमाम्पि
तरौलोकमस्म्मै ॥ ४५ ॥ सुञ्ज्ञानमासि । कामुधरणुम्मायितेकामुधर
णम्भूयात् ॥ अुग्नेर्भस्म्मास्युग्नेःपुरीषमसिुच्चितस्त्थपरिुच्चितऽऊर्द्धु
चितःश्रयध्वम् ॥ ४६ ॥ अयर्ठसः ॥ अयर्ठसोऽअुग्निर्यस्म्मिुन्त्सो
मुमिन्द्रःसुतन्दुधेजुठरेवावशानः ॥ सहस्रियुम्वाजमत्त्यन्नसप्तिर्ठ
ससुवान्त्सन्त्स्तूयसेजातवेदः ॥ ४७ ॥ अग्नेयत् ॥ अग्नेयत्तेदिविव
र्च्चः पृथिव्यांय्यदोषधीष्ष्वुप्प्स्वायजत्र ॥ येनान्तरिक्षमुर्व्वातुतन्थत्त्वे
१५

पङ्सभानुरंण्णवोनूचक्षांऽ ॥ ४८ ॥ अग्ग्नेंदिवः ॥ अग्ग्नेंदिवोऽअण्णं
मच्छांजिगास्यच्छांदेवाँऽ ऊंचिषेधिष्ण्यायें ॥ यारोंचनेपरस्तात्त्सू
र्य्यंस्ययाश्च्चावस्तांदुपतिष्ठंन्तुऽआपः ॥ ४९ ॥ पुरीष्यासोऽअग्ग्न
यंः । प्प्रावणेभिःसजोषसंः । जुषन्तांय्यज्ञमद्द्रुहोंनमीवाऽइषोंमहीः
॥ ५० ॥ इडांमग्ग्ने । पुरुदर्ठ्ंसर्ठ्ंसनिङ्गोःशंश्वत्तमर्ठ्ंहवंमानायसा
ध ॥ स्यान्नंःसूनुस्तनंयोविजावाग्ग्नेसातेंसुमतिर्भूत्त्वस्म्मे ॥ ५१ ॥
अयन्तें ॥ अयन्तेयोनिंर्ऋत्त्वियोयतोंजातोऽअरोंचथाः ॥ तञ्जानन्न
ग्नऽआरोहाथांनोवर्द्धयारयिम् ॥ ५२ ॥ चिदंसि ॥ चिदंसितयांदेव

तंयाङ्गिरस्वद्ध्रुवासींदपरिचिदंसितयांदेवतंयाङ्गिरस्वद्ध्रुवासींद ॥५३॥
लोकम्पृंण । च्छिद्रम्पृणाथोंसीदद्ध्रुवात्त्वम् ॥ इन्द्राग्नीत्त्वाबृहस्प
तिरस्मिन्न्योनांवसीषदन् ॥ ५४ ॥ ताऽअंस्य । सूदंदोहसुꣳसोमं
ꣳश्रीणन्तिपृश्न्नंयः । जन्मंन्देवानांविशंस्त्रिष्ष्वारोचनेदिवः ॥५५॥
इन्द्रंविश्वाः ॥ इन्द्रंविश्वांऽअवीवृधन्त्समुद्रव्यंचसङ्गिरंः ॥ रथी
तंमꣳरथीनांवाजांनाꣳसत्त्पंतिम्पतिम् ॥५६॥ समितम् ॥ समितꣳ
सङ्कल्पेथाꣳसम्प्रियौरोचिष्ष्णूसुमनस्यमांनौ ॥ इषमूर्ज्जमभिसं
वसांनौ ॥ ५७ ॥ संवांम् ॥ संवाम्मनांꣳसिसंव्व्रतासमुंचित्तान्या

कॅरम् ॥ अग्ग्नेपुरीष्ष्याधिपाभंवुत्त्वन्नुऽइषमूर्ज्जंठ्यजंमानायधेहि ॥
॥ ५८ ॥ अग्ग्नेत्त्वम् ॥ अग्ग्नेत्त्वम्पुरीष्ष्योरयिमान्पुष्टिमाँ२ऽअं
सि ॥ शिवाःकृत्त्वादिशुःसर्व्वाःस्वंठ्योनिमिहासंदः ॥ ५९ ॥ भवं
तन्नः ॥ भवंतन्नुःसमंनसौसचेंतसावरेपसौं ॥ मायुज्ञछहिंछसिष्टमायु
ज्ञपंतिञ्जातवेदसौशिवौभंवतमुद्यनः ॥ ६० ॥ मातेवंपुत्त्रम् ॥ मातेव
पुत्त्रम्पृंथिवीपुरीष्ष्यमुग्निछंस्वेयोनांवभारुषा ॥ तांविश्श्वैर्देवैर्ऋतु
भिःसंविदानःप्प्रजापंतिर्विश्श्वकंर्म्मावि॑मुंञ्चतु ॥ ६१ ॥ [ ७ ] अ
सुंन्वन्तुमयंजमानम् ॥ असुंन्वन्तुमयंजमानमिच्छस्तेनस्येत्त्या

मत्त्विहितस्कंरस्य ॥ अन्न्यमुस्म्मादिच्छुसातंऽइत्त्यानमोदेविनिर्ऋ
तेतुब्भ्यमस्तु ॥ ६२ ॥ नमुःसुतेनिर्ऋतेतिग्मतेजोयस्म्मयंविचृता
वन्धमेतम् ॥ युमेनुत्त्वंब्युम्म्यासंविदानोत्तमेनाकेऽअधिरोहयैनम् ॥
॥ ६३ ॥ यस्यांस्ते । घोरऽआसञ्जुहोम्म्येषाम्वन्धानामवुसर्ज्जना
य ॥ यान्त्वाजनोभूमिरितिप्प्रमदन्तुनिर्ऋतिन्त्वाहम्परिवेदाविश्श्व
तः ॥ ६४ ॥ यन्तेदेवीनिर्ऋतिराबवन्धुपाशंङ्ग्रीवास्वविचृत्त्यम् ॥ त
न्तेविष्ष्याम्म्यायुषोनमद्ध्यादथैताम्पितुमद्धिप्प्रसूतः ॥ नमोभूत्त्यै
येदञ्चकारं ॥ ६५ ॥ निवेशनःसङ्गमनः ॥ निवेशंनःसङ्गमंनोवसू

नुांविश्वांरूपाभिचंष्टेशचींभिः ॥ देवऽइंवसवितासुत्त्यधर्म्मैन्द्रोन
तंस्त्थौसमुरेपंथीनाम् ॥ ६६ ॥ सीरांयुञ्जन्ति । कुवयोंयुगाव्वितंन्वते
पृथक् ॥ धीरांदेवेषुंसुम्नुया ॥ ६७ ॥ युनक्तुसीरां ॥ युनक्तुसीराव्वि
युगातंनुष्वकृतेयोनौंव्वपतेहबीजंम् ॥ गिराचंश्श्रुष्टिःसभंराऽअसंन्नो
नेदींयुऽइत्त्सृण्य॑ःपुक्वमेयांत् ॥ ६८ ॥ शुनᳬसु । फालाविकृषन्तुभू
मिᳬशनङ्गीनाशांऽअभियंन्तुवाहैः ॥ शुनांसीराहविषातोशंमानासु
पिप्पलाऽओषंधीःकर्त्तनास्म्मे ॥ ६९ ॥ घृतेनुसीतां ॥ घृतेनुसीताम
धुनासमंज्ज्यतांविश्वैर्देवैरनुंमतामुरुद्भिः ॥ ऊर्ज्जस्वतीपयंसापिन्न्वं

मानास्म्मान्त्सीतिपयसाभ्यावंवृत्स्व ॥ ७० ॥ लाङ्गंलम्पवीरवत् ॥
लाङ्गंलम्पवीरवत्सुशेवंᳯसोमपित्त्सरु ॥ तदुद्वंपतिगामविम्प्रफर्व्यं
श्चपीवंरीम्प्रस्त्थावंद्रथवाहंणम् ॥ ७१ ॥ कामंङ्कामदुघे । धुक्ष्वमि
त्रायवरुणायच ॥ इन्द्रांयाश्विभ्याम्पूष्णेप्प्रजाभ्यऽओषंधी
भ्यः ॥ ७२ ॥ विमुंच्यध्वम् ॥ विमुंच्यध्वमघ्न्यादेवयानाऽअगंन्मत
मंसस्प्पारमस्य । ज्योतिंरापाम ॥ ७३ ॥ सजूरब्दः । सजूरब्दोऽ
अयंवोभिःसजूरुषाऽअरुंणीभिः ॥ सजोषंसावश्विनादंᳯसोभिः
सजूःसूरऽएतंशेनसजूर्वैश्वानरऽइडंयाघृतेनस्वाहां ॥ ७४ ॥

[ १३ ] याऽओषधीः ॥ याऽओषधीःपूर्वाजातादेवेभ्यस्त्रियुगम्पु
रा ॥ मनैनुबभ्रूणामुहꣳशतन्धामानिसप्तचं ॥ ७५ ॥ शुतंवः ॥
शुतंवोऽअम्बुधामानिसुहस्रमुतवोरुहः ॥ अधाशतक्रत्वोयूयमिम
म्मेऽअगुदङ्कृत ॥ ७६ ॥ ओषधीःप्रति । मोदद्धम्पुष्पवतीःप्रसू
वरीः ॥ अश्वाऽइवसुजित्वरीर्वीरुधःपारयिष्ण्वः ॥ ७७ ॥ ओ
षधीरिति । मातरस्तद्वोदेवीरुपब्रुवे ॥ सनेयमश्वङ्गाँवासऽआ
त्मानन्तवपूरुष ॥ ७८ ॥ अश्वत्थेवः ॥ अश्वत्थेवोनिषदनम्पुर्णे
वोवसुतिष्कृता ॥ गोभाजुऽइत्किलासथयत्सुनवथपूरुषम् ॥ ७९ ॥

यत्रौषधीः । सुमग्मतुराजानुःसमिताविव ॥ विप्रुःसऽउच्यतेभि
षग्रक्षोहामीवुचातनः ॥ ८० ॥ अश्वावतीᳪसोमावतीम् ॥ अ
श्वावतीᳪसोमावतीमूर्ज्जयन्तीमुदोजसम् ॥ आवित्सिसर्वाऽओ
षधीरुस्माऽअरिष्टतातये ॥ ८१ ॥ उच्छुष्मांः ॥ उच्छुष्माऽओ
षधीनाङ्गावोगोष्ठादिवेरते ॥ धनᳪसनिष्यन्तीनामात्मानन्तवपूरु
ष ॥ ८२ ॥ इष्कृतिर्नाम । वोमाताथोयूयᳪस्थनिष्कृतीः ॥ सी
राःपतत्रिणीस्स्थनयदामयतिनिष्कृथ ॥ ८३ ॥ अतिविश्वाः । प
रिष्ठास्तेनऽइवव्रजमक्रमुः ॥ ओषधीःप्राचुच्यवुर्यत्किञ्चतन्वो

रपं÷ ॥ ८४ ॥ यदिमाऽ ॥ यदिमाव्वाजयंन्नुहमोषंधीर्हस्तंऽआदुधे ॥
आुत्त्क्मायक्ष्मंस्यनश्यतिपुराजीवुगृभोंयथा ॥ ८५ ॥ यस्यौषधीः ।
प्प्रसप्पुंथाङ्गंमङ्गम्परुंष्प्परुः ॥ ततोयक्ष्मंव्विबांधद्ध्वऽउुग्ग्रोमंद्धमुशी
रिंव॥८६॥सुाकंय्यंक्ष्म ॥ सुाकंय्यंक्ष्मप्रपंतुचाषेंणकिकिदीविनां ॥सुा
कंव्वातंस्युद्ध्राज्ज्यांसुाकन्नंश्यनिहाकया॥८७॥शतं६० ०॥अुन्न्यावं÷॥
अुन्न्यावोंऽअुन्न्यामंवत्त्वुन्न्यान्न्यस्याुऽउपांवत ॥ ताःसव्वाः संव्विदानाऽ
इदम्मेप्प्रावंतुाव्वच÷ ॥ ८८ ॥ याःफुलिनीः । याःफुलिनीय्र्याऽअफुलाऽ
अपुष्पायाश्च्चंपुष्प्पिणीः ॥ बृहस्प्पतिंप्प्रसूतुास्त्तानोंमुञ्चुन्त्त्व६हंसः

॥ ८९ ॥ मुञ्चन्तुंमा । शपुत्थ्याुदथोंवरुणण्याुदुत ॥ अथोंयुमस्य
पड्डींशात्सर्व्वस्म्माद्देवकिल्विषात् ॥ ९० ॥ अवुपतंन्तीरवदन् ॥
अवुपतंन्तीरवदन्दिवऽओषंधयुस्प्परिं ॥ यञ्जीवमुश्नवांमहैनसरिं
ष्यातिपूरुंषः ॥ ९१ ॥ याऽओषंधीः ॥ याऽओषंधीःसोमंराज्ञी
र्बुह्वीःशुतविंचक्षणाः ॥ तासांमसित्त्वमुंत्तुमारङ्कामांयुशन्हृदे ॥९२॥
याऽओषंधीः ॥ याऽओषंधीःसोमंराज्ञीर्विष्ठिताःपृथिवीमनुं ॥ बृह
स्पतिंप्प्रसूताऽअस्यैसन्दंत्तवीर्य्यम् ॥ ९३ ॥ याश्च ॥ याश्चेदमु
पशृण्ण्वन्तियाश्चंदूरम्परांगताः ॥ सर्व्वाःसुङ्गत्यंवीरुधोस्यैसन्दंत्त

ब्रीठ्यम् ॥ १४ ॥ मावः ॥ मावौरिषत्त्वनितायस्म्मैचाहङ्नामिवं
द्विपाच्चतुष्पादस्म्माकर्ठसर्व्वमस्त्वनातुरम् ॥ १५ ॥ ओषधयुःसम् ॥
ओषधयुःसमवदन्तुसोमेनसुहराज्ञा ॥ यस्म्मैकृणोतिब्राह्मणस्तर्ठ
राजन्पारयामसि ॥ १६ ॥ नाशयित्रीबलासस्याशसऽउपचिता
मसि ॥ अथोशतस्युयक्ष्माणाम्पाकारोरसिनाशनी ॥ १७ ॥ त्त्वा
ङ्गन्धर्वाः ॥ त्त्वाङ्गन्धर्वाऽअखनुस्त्त्वामिन्द्रस्त्त्वाम्बृहस्पतिः ॥ त्त्वा
मोषधेसोमोराजाविद्वान्यक्ष्मादमुच्यत ॥ १८ ॥ सहस्वमे ॥
सहस्वमेऽअरातीःसहस्वपृतनायतः ॥ सहस्वसर्व्वम्पाप्मानर्ठसह

मानास्योषधे ॥ ९९ ॥ दीर्घायुस्त्ते ॥ दीर्घायुस्त्तऽओषधेखनि
तायस्म्मैंचत्त्वाखनाम्म्यहम् ॥ अथोत्त्वन्दीर्घायुर्भूत्त्वाशतवल्शा
विरोहतात् ॥ १०० ॥ त्त्वमुत्तमा । स्योषधेतवृक्षाऽउपस्त्तयः ॥
उपस्त्तिरस्त्तुसोस्म्माकंय्योऽअस्म्माँऽअभिदासति ॥ १०१ ॥
[ २७ ] मामांहिंसीज्जनितायःपृथिव्यायोवादिवंसत्त्यधर्म्माव्या
नट् ॥ यश्चापश्चन्द्राःप्प्रथमोजजानकस्म्मैदेवायहविषाविधेम ॥
॥ १०२ ॥ अब्भ्यावर्त्तस्व । पृथिवियज्ञेनपयसासह ॥ वपान्तेऽ
अग्निरिषितोऽअरोहत् ॥ १०३ ॥ अग्नेयत्त । अग्नेयत्तेशुक्रंय्य

च्छन्द्रंयत्पूतंयच्चंयुज्ञियम् ॥ तद्देवेभ्योभरामसि ॥ १०४ ॥ इषु
मूर्ज्जम् ॥ इषुमूर्ज्जमुहमितऽआदमृतस्युयोनिम्महिषस्युधाराम् ॥
आमुागोषुविशुत्त्वातुनूषुजहामिसेदिमनिराममर्मीवाम् ॥ १०५ ॥
अग्नेतव ॥ अग्नेतवुश्श्रवोवयोमहिभ्राजन्तेऽअर्च्चयोविभावसो ॥
बृहद्भानोशवसावाजमुक्थ्यन्दधासिदाशुषेकवे ॥ १०६ ॥ पावुक
वर्च्चाःशुक्रवर्च्चाः ॥ पावुकवर्च्चाःशुक्रवर्च्चाऽअनूनवर्च्चाऽउदियर्षिभा
नुना ॥ पुत्रोमातराविचरन्नुपावसिपृणक्षिरोदसीऽउभे ॥ १०७ ॥ ऊ
र्ज्जोनपात् ॥ ऊर्ज्जोनपाज्जातवेदःसुशस्तिभिर्म्मन्दस्वधीतिभिर्हि

तः ॥ त्वेऽइषुꣳसन्दंधुर्भूरिवर्पसश्चित्रोतयोव्वामजाताः ॥ १०८ ॥
इरुज्ज्यन्नग्ने । प्प्रथयस्वजन्तुभिरुस्म्मेरायोऽअमर्त्त्य ॥ सदर्शतस्य
वपुषोव्विराजसिपृणाक्षिसानुसिक्क्रतुम् ॥ १०९ ॥ इष्कर्त्तारमद्ध्वरस्यं ॥
इष्कर्त्तारमद्ध्वरस्यप्प्रचेतसुङ्क्षयन्तुꣳराधसोमुहः ॥ रातिंव्वामस्यसु
भगाम्मुहीमिषन्दधासिसानसिꣳरयिम् ॥ ११० ॥ ऋतावानम्म
हिषम् । व्विश्वदर्शतमुग्निꣳसुम्म्नायदधिरेपुरोजनाः ॥ श्रुत्त्कर्णं
ꣳसुप्प्रथस्तमन्त्वागिरादैव्यम्मानुषायुगा ॥ १११ ॥ आप्प्यायस्व ।
समेतुतेव्विश्श्वतःसोमवृष्ण्यम् ॥ भवाव्वाजस्यसङ्गथे ॥ ११२ ॥

सन्तें ॥ सन्तुपयांꣳसिसमुयन्तुवाजाऽसंवृष्ण्यांन्यभिमातिषा
हं÷ ॥ आप्प्यायंमानोऽअमृतांयसोमदिविश्श्रवांꣳस्युत्तमानिंधिष्ष्व
॥ ११३ ॥ आप्प्यायस्व । मदिन्तमुसोमुविश्वेंभिरꣳशुभिं÷ ॥
भवांनऽसुप्प्रथस्त्तमुऽसखांवृधे ॥ ११४ ॥ आतें । वृत्त्सोमनोंयम
त्परुमाच्चित्सुधस्त्थांत् ॥ अग्ग्नेत्त्वाङ्गांमयागिरा ॥ ११५ ॥ तुब्भ्यु
न्ताऽ ॥ तुब्भ्युन्ताऽअंङ्गिरस्त्तमुविश्श्वां÷सुक्षितयुऽपृथंक् ॥ अग्ग्नेका
मांययेमिरे ॥११६॥ अग्ग्निऽप्प्रियेषुं ॥ अग्ग्निऽप्प्रियेषुधामंसुकामोंभू
तस्युभव्व्यंस्य ॥ सुम्म्राडेकोविराजति ॥११७॥ [ १६ ] इतिवाजस

नेयसंहितायांद्वादशोऽध्यायः ॥१२॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्
सूत्रम् ॥ मयिगृह्णामिपञ्चदशध्रुवासिमधुवाताएकादशकौसम्यक्स्रवं
तिनवेमंमाषडपांत्वैकाऽयंपुरःपञ्चसप्ताष्टापञ्चाशत् ॥ मयिगृह्णामि ॥
मयिगृह्णाम्म्यग्ग्रेऽअग्निँरायस्पोषांयसुप्रजास्त्वायंसुवीर्य्याय ॥
मामुदेवताःसचन्ताम् ॥ १॥ अपाम्पृष्ठम् ॥ अपाम्पृष्ठमंसियोनिरग्ग्नेः
संमुद्रमुभितःपिन्वंमानम् ॥ वर्द्धमानोमुहाँऽआचुपुष्करेदिवोमात्र
याव्वरिम्म्णाप्प्रंथस्व ॥ २ ॥ ब्रह्मंजज्ञानम् ॥ ब्रह्मंजज्ञानम्प्र
थुमम्पुरस्ताद्विसीमुतःसुरुचोव्वेनऽआंवः ॥ सवुद्ध्याऽउपमाऽअस्य

विष्ठाऽसुतश्चयोनिमसतश्चविवः ॥ ३ ॥ हिरण्यगर्भःसमवर्त्त
ताग्रेभूतस्यजातःपतिरेकआसीत् ॥ सदाधारपृथिवीन्द्यामुतेमा
ङ्कस्मैदेवायहविषाविधेम ॥ ४॥ द्रप्सश्चस्कन्द। पृथिवीमनुद्यामि
मञ्चयोनिमनुयश्चपूर्वः ॥ समानंयोनिमनुसञ्चरन्तन्द्रप्सञ्जुहो
म्म्यनुसप्तहोत्राः ॥ ५ ॥ नमोस्तु। सर्पेभ्योयेकेचपृथिवीमनु ॥
येअन्तरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः ॥ ६ ॥ याइषवः ॥
याइषवोयातुधानानांयेवावनस्पतीँरनु ॥ येवावटेषुशेरतेतेभ्यः
सर्पेभ्योनमः ॥७॥ येवा। मीरोचनेदिवोयेवासूर्यस्यरश्मिषु ॥

येषांमुप्सुसदंस्कृतन्तेभ्यंःसर्पेभ्योनमंः ॥ ८॥ कृणुष्वपाजंः ॥
कृणुष्वपाजुःप्रसितिन्नपृथ्वींयाहिराजेवामंवाँऽइभेन ॥ तृष्वी
मनुप्रसितिन्द्रूणानोस्तासिविध्यरक्षसुस्तपिंष्ठैः ॥ ९ ॥ तवंभ्र
मासंः॥तवंभ्रुमासंऽआशुयापंतुन्त्यनुंस्पृशधृषुताशोशुंचानः ॥ तपू
ꣳष्यग्नेजुह्वापतङ्गानसंन्दितोविसृंजुविष्वंगुल्काः॥१०॥ प्रतिस्पप
शंः॥ प्रतिस्पशोविसृंजुतूर्णितमोभवांपायुर्विशोऽअस्याऽअदंब्धः ॥
योनोंदूरेअघशंꣳसोयोऽअन्त्यग्नेमाकिंष्टेव्यथिरादंधर्षीत्॥११॥ उदं
ग्नेतिष्ठुप्रत्यातंनुष्वुन्यमित्रांꣳऽओषतात्तिग्महेते ॥ योनोऽअरां

तिर्ष्ठसमिधानचुक्रेनीचातन्धक्ष्यतुसन्नशुष्कम् ॥ १२ ॥ उद्धौभव ।
उद्धौभंवुप्प्रतिविद्धयाद्धयुस्म्मदाविष्कृणुष्वुदैव्यान्यग्ग्ने॥ अवस्त्थि
रातंनुहियातुजूनांआमिमजामिम्प्रमृणीहिशत्रून् ॥ अग्निष्ट्वातेजसा
सादयामि ॥ १३ ॥ अग्निम्मूर्द्धा । दिवङ्ककुत्त्पतिः पृथिव्याअ
यम् ॥ अपाᳬरेताᳬसिजिन्वति ॥ इन्द्रस्युत्त्वौजसासादयामि ॥
॥ १४ ॥ भुवोयुज्ञस्य ॥ भुवोयुज्ञस्युरजसश्चनेतायत्रानियु
द्भिःसचसेशिवाभिः ॥ दिविमूर्द्धानन्दधिषेस्वर्षाञ्जिह्वामग्ग्नेचकृषेह
व्युवाहम् ॥ १५ ॥ [ १५ ] ध्रुवासि । धुरुणास्तृताविश्वकर्म्मणा ॥

मात्त्वांसमुद्रऽउद्वंधीन्मासुंपण्णोंव्यंथमानापृथिवीन्दृंᳫह ॥ १६ ॥
प्रजापतिष्ट्वा । सादयत्त्वपाम्पृष्ठेसमुद्रस्येमंन् ॥ व्यचंस्वतीम्प्रथं
स्वतीम्प्रथंस्वपृथिव्यंसि ॥ १७ ॥ भूरंसि ॥ भूरंसिभूमिरुस्यदिति
रसिव्विश्श्वधायाव्विश्श्वंस्यभुवंनस्यधुर्त्त्री ॥ पृथिवींर्यंच्छपृथिवीन्दृंᳫ
हपृथिवीम्माहिंᳫसीः ॥ १८ ॥ विश्श्वंस्मैप्प्राणाय ॥ विश्श्वंस्मै
प्प्राणायांपानायंव्व्यानायोंदानायंप्प्रतिष्ठायैंचुरित्त्राय ॥ अग्निष्ट्वाभि
पांतुमह्यास्वस्त्याच्छर्दिषाशन्तमेनुतयांदेवतंयाङ्गिरुस्वद्ध्रुवासींद ॥
॥ १९ ॥ काण्डांत्त्काण्डात्प्ररोहन्ती । परुषःपरुषुस्पारि ॥ एवानो

दूर्वेप्प्रतनुसुहस्रेणशुतेनंच ॥ २० ॥ याशुतेनं । प्प्रतुनोषिसुहस्रेणव्वि
रोहंसि ॥ तस्यांस्तेदेवीष्टकेव्विधेमहुविषांव्वयम् ॥ २१ ॥ यास्ते
ऽअग्नेसूर्य्येरुचोदिवमातुन्वन्तिरश्मिभिः ॥ ताभिन्नोऽअद्यस
र्वाभीरुचेजनायनस्कृधि ॥ २२ ॥ यावः ॥ यावोदेवाःसूर्य्ये
रुचोगोष्वश्वेषुयारुचः ॥ इन्द्राग्नीताभिःसर्वाभीरुचंन्नोधत्त
वृहस्पते ॥ २३ ॥ व्विराड्ज्योतिः ॥ व्विराड्ज्योतिरधारयत्स्वरा
ड्ज्योतिरधारयत् ॥ प्रजापतिष्ट्वासादयतुपृष्ठेपृथिव्याज्ज्योतिष्मम
तीम् ॥ व्विश्वंस्मैप्प्राणायापानायव्व्यानायव्विश्वञ्ज्योतिर्यच्छ ॥

अग्निष्टेधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रुवासीद ॥ २४ ॥ मधुश्च ॥
मधुश्चमाधवश्चवासन्तिकावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्या
वापृथिवीकल्पन्तामापऽओषधयःकल्पन्तामग्नयःपृथङ्ममज्यै
ष्ठ्यायसव्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥ वास
न्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवत
याङ्गिरस्वद्ध्रुवेसीदतम् ॥ २५ ॥ अषाढासि ॥ अषाढासिसह
मानासहस्वारातीःसहस्वपृतनायतः ॥ सहस्रवीर्य्यासिसामाजि
न्व ॥ २६ ॥ [ ११ ] मधुवाताः ॥ मधुवाताऽऋतायतेमधुक्ष

रन्तुसिन्धवः ॥ माध्वीर्नःसुन्त्वोषधीः ॥ २७ ॥ मधुनक्तम् ॥ म
धुनक्तमुतोषसोमधुमत्पार्थिवꣳरजः ॥ मधुद्यौरस्तुनःपिता ॥
॥ २८ ॥ मधुमान्नः ॥ मधुमान्नोवनस्पतिर्म्मधुमाꣳअस्तुसूर्य्यः॥
माध्वीर्गावोभवन्तुनः ॥ २९ ॥ अपाङ्गम्भन् ॥ अपाङ्गम्भन्त्सीदमा
त्वासूर्य्योभितोप्सीन्माग्निर्वैश्वानरः ॥ अच्छिन्नपत्राःप्रजाऽ
अनुवीक्षस्वानुत्वादिव्यावृष्टिःसचताम् ॥ ३० ॥ त्रीन्त्समुद्रा
न् ॥ त्रीन्त्समुद्रान्त्समसृपत्स्वर्ग्गानपाम्पतिर्वृषभऽइष्टकानाम् ॥ पु
रीषंवसानःसुकृतस्यलोकेतत्रगच्छयत्रपूर्वेपरेताः ॥ ३१ ॥ महीद्यौः

पृथिवीचंनऽइमंय्युज्ञम्मिमिक्षताम् ॥ [illegible]
विष्णोःकर्म्माणि । पश्यतुयतौव्व्रतानिपस्पुशे ॥ इन्द्रस्ययुज्ज्युःस
खा ॥ ३३ ॥ ध्रुवासि । धुरुणेतोजज्ञेप्रथममेभ्योयोनिभ्योऽअधि
जातवेदाः ॥ सगायुत्र्यात्रिष्टुभानुष्टुभाचदेवेभ्योहुव्यंवहतुप्प्रजान
न् ॥३४॥ इषेराये ॥ रमस्वुसहंसेद्युम्न्नऽऊर्ज्जेऽअपत्त्याय ॥ सुम्म्राड
सिस्वुराडसिसारस्वुतौत्त्वोत्त्सौप्प्रावताम् ॥ ३५ ॥ अग्ग्नेयक्ष्व ॥
अग्ग्नेयुक्ष्वाहियेवाश्श्वासोदेवसुाधवः ॥ अरुंव्वहन्तिमुन्न्यवे ॥ ३६ ॥
युक्ष्वाहि । देवुहूतमाँऽअश्वाँऽअग्ग्नेरुथीरिव ॥ निहोतापूर्व्व्यःसदः॥
१७

॥ ३७ ॥ [ ११ ] सुम्म्यक्स्रंवन्ति । सुरितोनधेनाऽअन्तर्हृदामनंसा
पूयमांनाः ॥ घृतस्युधाराअभिचांकशीमिहिरुण्ण्ययोवेतुसोमद्ध्येऽ
अग्नेः ॥३८॥ ऋचेत्त्वां । रुचेत्त्वांभासेत्त्वाज्ज्योतिंषेत्त्वा ॥ अभूदिदं
विश्वंस्युभुवंनस्युवाजिनमुग्ग्नेर्वैश्वानुरस्यंच ॥ ३९ ॥ अुग्निर्ज्ज्योतिं
षा ॥ अग्निर्ज्ज्योतिंषाज्ज्योतिष्म्मान्नुक्क्मोवर्च्चंसावर्चस्वान् ॥ सुहस्त्र
दाऽअंसिसुहस्त्रांयत्त्वा ॥ ४० ॥ आदित्यङ्गर्भम् ॥ आदित्यङ्गर्भुं
म्पयंसासमंङ्ग्धिसुहस्त्रंस्यप्प्रातिमांविश्वरूपम् ॥ परिंवृङ्ग्धिहरंसामाभि
मंᳯस्त्थाःशुतायुषङ्कृणुहिचीयमांनः ॥ ४१ ॥ वातंस्यजूतिं । वरुंण

स्युनाभिमश्वंअज्ञानँसरिरस्यमध्यें ॥ शिशुन्नदीनाँहरिमद्रिबु
ध्नमग्नेमाहिंसीःपरमेव्योमन् ॥ ४२ ॥ अजंस्त्रुमिन्दुम् ॥ अजंस्त्रु
मिन्दुमरुषम्भुरण्युमग्निमीडेपूर्वचित्तिन्नमोभिः ॥ सपर्वभिर्ऋतुशः
कल्पमानोगाम्माहिंसीरदितिंविराजम् ॥ ४३ ॥ वरूत्रीन्त्वष्टुः ॥
वरूत्रीन्त्वष्टुर्वरुणस्यनाभिमविंअज्ञानाँरजसःपरस्मात् ॥ मही
ँसाहस्रीमसुरस्यमायामग्नेमाहिंसीःपरमेव्योमन् ॥ ४४ ॥ योऽ
अग्निः ॥ योऽअग्निरग्नेरध्यजायतशोकात्पृथिव्याऽउतवादिवस्प
रि ॥ येनंप्रजाविश्वकर्माजजानतमग्नेहेडःपरितेवृणक्तु ॥ ४५ ॥

चित्रन्देवानाम् ॥ चित्रन्देवानामुदगादनीकञ्चक्षुर्म्मित्रस्यवरुणस्या
ग्ग्नेः ॥ आप्प्राद्यावापृथिवीऽअन्तरिक्षꣳसूर्य्यऽआत्म्माजगतस्तस्त्थु
षश्च ॥ ४६ ॥ [ ९ ] इमम्मा । हिꣳसीर्द्विपादम्पशुꣳसहस्राक्षोमेधा
यचीयमानः ॥ मयुम्पशुम्मेधमग्ग्नेजुषस्वतेनचिन्न्वानस्तन्न्वोनिषी
द ॥ मयुन्तेशुगृच्छतुयन्द्विष्ष्मस्तन्तेशुगृच्छतु ॥ ४७ ॥ इमम्मा ।
हिꣳसीरेकशफम्पशुङ्कनिक्रदंवाजिनंवाजिनेषु ॥ गौरमारण्यमनुतेदि
शामितेनचिन्न्वानस्तन्न्वोनिषीद ॥ गौरन्तेशुगृच्छतुयन्द्विष्ष्मस्तन्ते
शुगृच्छतु ॥ ४८ ॥ इमꣳसाहस्रम् ॥ इमꣳसाहस्रꣳशतधारमुत्त्सव्व्यु

च्चयमानꣳसरिरस्युमध्ध्ये ॥ घृतन्दुहानामदितिञ्जनायाग्ग्नेमाहिꣳ
सीःपरमेव्योमन् ॥ गवयन्तेशुगृच्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥
॥ ४९ ॥ इममूर्णायुं । वरुणस्यनाभिन्त्वचम्पशूनान्द्विपदाञ्चतुष्प
दाम् ॥ त्वष्टुःप्रजानाम्प्रथमञ्जनित्रमग्नेमाहिꣳसीःपरमेव्योमन् ॥
उष्ट्रमारण्यमनुतेदिशामितेनचिन्वानस्तन्वोनिषीद ॥ उष्ट्रन्तेशुगृ
च्छतुयन्द्विष्मस्तन्तेशुगृच्छतु ॥ ५० ॥ अजोहि ॥ अजोह्यग्नेरज
निष्टशोकात्सोऽअपश्यज्जनितारमग्ने ॥ तेनदेवादेवतामग्रमायँस्ते
नरोहमायन्नुपमेद्ध्यासः ॥ शरभमारण्यमनुतेदिशामितेनचिन्वा

नस्तुन्वोनिषीद॥शुरुभन्तेशुगृंच्छतुयन्द्विष्मस्तन्तेशुगृंच्छतु॥५१॥
त्वंठ्यॅविष्ठ। दाशुषोनॄँःपाहिशृणुधीगिरः॥रक्षांतोकमुतत्त्मना॥
॥५२॥ अपान्त्वा॥ अपान्त्वेमन्त्सादयाम्म्युपान्त्वोद्मन्त्सादया
म्म्युपान्त्वाभस्मन्त्सादयाम्म्युपान्त्वाज्ज्योतिषिसादयाम्म्युपान्त्वा
यनेसादयाम्म्यर्णवेत्त्वासदनेसादयामिसमुद्रेत्त्वासदनेसादयामिस
रिरेत्त्वासदनेसादयाम्म्युपान्त्वाक्षयेसादयाम्म्युपान्त्वासाधिषिसाद
याम्म्युपान्त्वासदनेसादयाम्म्युपान्त्वासधस्त्थेसादयाम्म्युपान्त्वा
योनौसादयाम्म्युपान्त्वापुरीषेसादयाम्म्युपान्त्वापाथसिसादयामि

गायुत्रेणंत्त्वाच्छन्दंसासादयामित्रैष्टुंभनत्त्वाच्छन्दंसासादयामिपा
ङ्क्तेनत्त्वाच्छन्दंसासादयामि ॥ ५३ ॥ [ १ ] अुयम्पुरः ॥ अुयम्पु
रोभुवस्तस्यंप्प्राणोभौंवायुनोवंसुन्तःप्प्राणायुनोगांयुत्रीवांसुन्तीगायु
त्र्यैगांयुत्रङ्गांयुत्रादुंपाꣳशुरुंपाꣳशोस्त्रिवृत्त्रिवृतोरथन्तुरंवसिंष्ठुऽऋ
षिं÷प्प्रुजापंतिगृहीतयुात्त्वयांप्प्राणङ्गृंह्णामिप्प्रुजाभ्य÷ ॥ ५४ ॥
अुयन्दंक्षिुणा । वििश्वकंर्म्मुातस्युमनोंविश्वकर्म्मुणङ्ग्रीष्मोमांनुस
स्त्रिुष्टुब्ग्रैष्म्मीत्रिष्टुभं÷स्वारꣳस्वारादंन्तर्य्युामोन्तर्य्युामात्पंञ्चद
शःपंञ्चदुशाद्बृहद्बृरद्वाजुऽऋषिं÷प्प्रुजापंतिगृहीतयुात्त्वयुामनोंगृह्णामि

प्प्रजाभ्यं÷ ॥ ५५ ॥ अयम्पश्चात् ॥ अयम्पश्चाद्विश्वव्यचास्त
स्यचक्षुर्वैश्वव्यचसंवर्षाश्चाक्षुष्योजगतीवार्षीजगत्याऽऋक्समम्
क्समाच्छुक्रःशुक्रात्सप्तदशःसप्तदशाद्वैरूपञ्जमदग्निर्ऋषिं÷प्प्रजा
पतिगृहीतयात्त्वयाचक्षुर्गृह्णामिप्प्रजाभ्यं÷ ॥ ५६ ॥ इदमुत्तरात्स्व
स्तस्यश्रोत्रंसौवंशरच्छ्रौत्र्यनुष्टुप्शारद्यनुष्टुभऽऐडमैडान्मन्थीम
न्थिनऽएकविंशऽएकविंशाद्वैराजंविश्वामित्रऋषिं प्प्रजापतिगृही
तयात्त्वयाश्रोत्रङ्गृह्णामिप्प्रजाभ्यं÷ ॥ ५७ ॥ इयमुपरिमतिस्तस्यैवा
ङ्मात्याहेमन्तोवाच्यःपङ्क्तिर्हैमन्तीपङ्क्त्यैनिधनवन्निधनवतऽआग्रय

णात्त्रिणवत्रयस्त्रिंशौत्त्रिणवत्रयस्त्रिंशाभ्यांस्तोमाभ्यांशाक्वररैवतेविश्वकर्म्मऽ
ऋषिंप्रजापतिगृहीतयात्त्वयावाचङ्गृह्णामिप्रजाभ्योलोकन्ताऽइन्द्र
म् ॥"लोकम्पृणच्छिद्रम्पृणाथोसीदध्रुवात्त्वम् ॥ इन्द्राग्नीत्त्वाबृहस्प
तिरस्मिन्योनावसीषदन्॥१॥ ताऽअस्यसूददोहसःसोमंश्रीणन्ति
पृश्नयः ॥ जन्मन्देवानांविशस्त्रिष्वारोचनादिवः ॥ २ ॥ इन्द्रंविश्वाऽ
अवीवृधन्त्समुद्रव्यचसङ्गिरः ॥ रथीतमंरथीनांवाजानांसत्पति
म्पतिम् ॥ ३ ॥" ॥ ५८ ॥ [५] इति श्रीवाजसनेयसंहितायांत्रयो
दशोऽध्यायः ॥ १३ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाकसूत्रम् ॥ ध्रुव

क्षितिःषट्सजूर्ऋतुभिर्मूर्द्धावयोर्द्विकाविन्द्राग्नीआयुर्मैषट्कावाशुस्त्रि
वृदेकाग्नेर्भागोस्येकयाचतुष्कावष्टावेकात्रिंशत् ॥ हरिः ॐध्रुवक्षिति
र्ध्रुवयोनिः ॥ ध्रुवाक्षितिर्ध्रुवयोनिर्ध्रुवासिध्रुवंय्योनिमासीदसाधुया ॥
उख्यस्यकेतुम्प्रथमञ्जुषाणाश्विनाध्वर्यूसादयतामिहत्त्वा ॥ १ ॥
कुलायिनीघृतवती ॥ कुलायिनीघृतवतीपुरन्धिःस्योनेसीदसदनेपृ
थिव्याः ॥ अभित्त्वारुद्रावसवोगृणन्त्विमाब्रह्मपीपिहिसौभगाया
श्विनाध्वर्यूसादयतामिहत्त्वा ॥ २ ॥ स्वैर्दक्षैः ॥ स्वैर्दक्षैर्दक्षपितेहसी
ददेवानांᳲसुम्नेबृहतेरणाय ॥ पितेवैधिसूनवऽआसुशेवास्वावेशात

स्युसंविंशस्वाश्विनाध्वर्यूसादयतामिहत्त्वा ॥ ३ ॥ पृथिव्याःपुरी
षम् ॥ पृथिव्याःपुरीषमस्यप्सोनामतान्त्वाविश्वेऽअभिगृणन्तुदे
वाः ॥ स्तोमपृष्ठाघृतवतीहसीदप्रजावदस्मेद्रविणायजस्वाश्विना
ध्वर्यूसादयतामिहत्त्वा॥४॥आदित्यास्त्वा । पृष्ठेसादयाम्यन्तरिक्ष
स्यधर्त्रीविष्टम्भनीन्दिशामधिपत्नीम्भुवनानाम्॥ऊर्मिर्द्रप्सोऽअपा
मसिविश्वकर्मातऽऋषिरश्विनाध्वर्यूसादयतामिहत्त्वा॥५॥शुक्रश्च।
शुक्रश्चशुचिश्चग्रैष्मावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवी
कल्पन्तामापऽओषधयःकल्पन्तामग्नयःपृथङ्मम्ज्यैष्ठ्यायसव्रं

ताऽ ॥ येऽअग्नयुःसमनसोन्तुराद्यावापृथिवीऽइमे ॥ ग्रैष्मावृतूऽ
अभिकल्पमानाऽइन्द्रमिवदेवाअभिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ ६ ॥ [ ६ ] सुजूर्ऋतुभिःसुजूर्विधाभिः सुजूर्देवैर्वयोना
धैरग्नयेत्त्वावैश्वानुरायाश्विनाध्वर्यूसादयतामिहत्त्वासुजूर्ऋतुभिः
सुजूर्विधाभिःसुजूर्वसुभिःसुजूर्देवैर्वयोनाधैरग्नयेत्त्वावैश्वानुराया
श्विनाध्वर्यूसादयतामिहत्त्वासुजूर्ऋतुभिःसुजूर्विधाभिःसुजूरुद्रैःसु
जूर्देवैर्वयोनाधैरग्नयेत्त्वावैश्वानुरायाश्विनाध्वर्यूसादयतामिहत्त्वा
सुजूर्ऋतुभिःसुजूर्विधाभिःसुजूरादित्यैःसुजूर्देवैर्वयोनाधैरग्नयेत्त्वावै

श्वानुरायाश्श्विनांछ्छर्द्ध्यूसादयतामिहत्त्वासुजूर्ऋतुभिःसुजूर्व्विधाभिः
सुजूर्व्विश्श्वैर्द्देवैःसजूर्द्देवैर्व्वयोनाधैरग्ग्नयेत्त्वावैश्श्वानुरायाश्श्विनांछ्छ
र्द्ध्यूसादयतामिहत्त्वा ॥ ७ ॥ प्प्राणम्मे । पाह्यपानम्मेपाहिव्यान
म्मेपाहिचक्षुर्म्मऽउर्व्व्याव्विभाहिश्श्रोत्रम्मेश्श्लोकय ॥ अपःपिन्न्वौ
षधीर्ज्जिन्न्वद्विपादवचतुष्प्पात्पाहिदिवोवृष्टिमेरय ॥ ८ ॥ [ २ ]
मूर्द्धाव्वयःप्प्रजापतिश्छन्दःक्षत्रंव्वयोमयन्दुञ्छन्दोव्विष्टम्भोव्वयोधिप
तिश्छन्दोव्विश्श्वकर्म्माव्वयःपरमेष्ठीच्छन्दोवुस्तोव्वयोव्विवलञ्छन्दो
वृष्णिर्व्वयोव्विशालञ्छन्दःपुरुषोव्वयस्तन्द्रञ्छन्दोव्याघ्रोव्वयोनाधृष्ट

स्छन्दः॑ सि॒ꣳहो वयः॑ छ॒दिश्छन्दः॑ पष्ठ॒वाड्वयो॑ बृह॒ती छन्द॑ऽउ॒क्षा व
यः॑ क॒कुप्छन्द॑ऽऋष॒भो वयः॑ स॒तोबृ॑ह॒ती छन्दो॑ऽन॒ड्वान्वयः॑ ॥ ९ ॥
अ॒न॒ड्वान्वयः॑ प॒ङ्क्तिश्छन्दो॑ धे॒नुर्वयो॒ जग॑ती॒ छन्द॒स्त्र्य॑वि॒र्वय॑स्त्रि॒ष्टुप्छ
न्दो॑ दित्य॒वाड्वयो॑ वि॒राट्छन्दः॒ पञ्चा॑वि॒र्वयो॑ गाय॒त्री छन्द॑स्त्रिव॒त्सो व
य॑ऽउ॒ष्णिक्छन्द॑स्तुर्य॒वाड्वयो॑ऽनु॒ष्टुप्छन्दो॑ लो॒कं ता इन्द्र॑म् ॥ १० ॥
[ २ ] इन्द्रा॑ग्नी॒ऽअव्य॑थमानाम् ॥ इन्द्रा॑ग्नी॒ऽअव्य॑थमाना॒
मिष्ट॑कां दृꣳहतं यु॒वम् ॥ पृ॒ष्ठेन॒ द्यावा॑पृथि॒वीऽअ॒न्तरि॑क्षं च॒ वि बा॑ध



१ लोकम्पृण। २ ताअस्य। ३ इन्द्रंविश्वाः।

से ॥ ११ ॥ व्विश्श्वकर्म्मात्त्वा । सादयत्त्वुन्तरिक्षस्यपृष्ठेव्यचस्वं
तीम्प्रथस्वतीमुन्तरिक्षंय्यच्छान्तरिक्षन्दृꣳहान्तरिक्षम्माहिꣳसीः ॥
व्विश्श्वस्म्मैप्प्राणायापानायव्व्यानायोदानायप्प्रतिष्ठायैचुरित्राय ॥
व्वायु_ष्ट्वाभिपातुमुह्यास्वुस्त्याच्छर्दिषाशन्तमेनुतयादेवतयाङ्गिरुस्व
द्ध्रुवासीद ॥ १२ ॥ शतम् ॥ ७०० राज्ञ्यसि ॥ राज्ञ्यसिप्प्राचीदि
ग्विराडसिदक्षिणादिक्सुम्म्राडसिप्प्रतीचीदिक्स्वुराडस्युदीचीं
दिगधिपत्त्न्यसिबृहतीदिक् ॥ १३ ॥ व्विश्श्वकर्म्मात्त्वा ॥ सादयत्त्वु
न्तरिक्षस्यपृष्ठेज्ज्योतिष्मतीम् ॥ व्विश्श्वस्म्मैप्प्राणायापानायव्व्या

संहि. नायुविश्वस्युयोतिर्यच्छ ॥ वायुष्टेऽधिपतिस्तयादेवतयाङ्गिरस्वद्ध्रु पृ.अ.
॥१०४॥ वासीद ॥ १४ ॥ नभश्च । नभस्यश्च वार्षिकावृतूऽअग्नेरन्तःश्ले १४
षोसिकल्पेतान्द्यावापृथिवीकल्पन्तामापऽओषधयुःकल्पन्तामु
ग्नयुःपृथुङ्मुज्ज्यैष्ठ्यायुसव्रताः ॥ येऽअग्नयुःसमनसोन्तराद्या
वापृथिवीऽइमे ॥ वार्षिकावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअ
भिसंविशन्तुतयादेवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ १५ ॥ इषश्च ॥
इषश्चोर्जश्चशारदावृतूऽअग्नेरन्तःश्लेषोसिकल्पेतान्द्यावापृथिवी ॥१०४॥
कल्पन्तामापऽओषधयुःकल्पन्तामुग्नयुःपृथङ्मुज्ज्यैष्ठ्यायुस

व्रंताऽ ॥ यऽअग्नयुश्समंनसोन्तुराद्यावांपृथिवीइमे ॥ शारुदावृतूऽ
अभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतयादेवतंयाङ्गिरस्व
द्धवेसीदतम् ॥ १६ ॥ [ ६ ] आयुर्म्मे । पाहिप्प्राणम्मेपाह्यपा
नम्मेपाहिव्यानम्मेपाहिचक्षुर्म्मेपाहि श्रोत्रम्मेपाहिवाचंम्मेपिन्वम
नोमेजिन्वात्त्मानंम्मेपाहिज्ज्योतिम्मेयच्छ ॥ १७ ॥ माच्छन्दः ।
प्प्रमाच्छन्दःप्प्रतिमाच्छन्दोऽअस्त्रीवयश्च्छन्दःऽपङ्क्तिश्च्छन्दऽउ
ष्णिक्छन्दोबृहतीच्छन्दोनुष्टुप्छन्दोविराट्छन्दोगायत्रीच्छन्दस्त्रि
ष्टुप्छन्दोजगतीच्छन्दःपृथिवीच्छन्दः ॥ १८ ॥ पृथिवीच्छन्दो

न्तरिक्षुञ्छन्दोद्यौश्च्छन्दुᳬसमाश्च्छन्दोनक्षत्राणिच्छन्दोवाक्छ
न्दोमनुश्च्छन्दः कृषिश्च्छन्दोहिरण्युञ्छन्दोगौश्च्छन्दोजाच्छन्दो
ऽश्वुश्च्छन्दः ॥ १९ ॥ अग्निर्देवता । अग्निर्देवतावातोदेवतासूर्यो
देवताचन्द्रमादेवतावसवोदेवतारुद्रादेवतादित्यादेवतामरुतोदेवता
विश्वेदेवादेवताबृहस्पतिर्देवतेन्द्रोदेवतावरुणोदेवता ॥२०॥ मूर्द्धा
सि ॥ मूर्द्धासिराड्ध्रुवासिधरुणाधर्त्र्यसिधरणी ॥ आयुषेत्त्वावर्च्चसे
त्वाकृष्यैत्त्वाक्षेमायत्त्वा ॥ २१ ॥ यन्त्रीराट् ॥ यन्त्रीराड्यन्त्र्यसि

यमंनीध्रुवासिधरित्री ॥ इषेत्त्वोर्ज्जैत्त्वांरय्यैत्त्वापोषांयत्त्वालोकन्ताऽइ
न्द्रम् ॥ २२ ॥ [ ६ ] आशुस्त्रिवृत ॥ आशुस्त्रिवृद्भान्तःपंश्चदशोव्यो
मासप्तदशोधरुणंऽएकविंशःप्प्रतूर्त्तिरष्टादशस्तपोनवदशोभीवर्त्तः
संविंशोवर्च्चोद्वाविंशःसम्भरणस्त्रयोविंशोयोनिश्चतुर्विंशोग
र्भाःपञ्चविंशऽओजस्त्रिणवःक्रतुरेकत्रिंशःप्प्रतिष्ठात्रयस्त्रिंशोब्र
ध्नस्यविष्टपंश्चतुस्त्रिंशोनाकःषट्त्रिंशोविवर्त्तोष्टाचत्त्वारिंशोधर्त्र
श्चतुष्टोमः ॥ २३ ॥ [ १ ] अग्नेर्भागः ॥ अग्नेर्भागोसिदीक्षायाऽ

१ लोकम्पृण । २ ताअस्य । ३ इन्द्रंविश्वाः ।

आधिपत्यम्ब्रह्मंस्पृतन्त्रिवृत्स्तोमऽइन्द्रस्यभागोसिविष्णोराधि
पत्यङ्क्षत्रꣳस्पृतम्पञ्चदशस्तोमोनृचक्षसाम्भागोसिधातुराधिप
त्यञ्जनित्रꣳस्पृतꣳसप्तदशस्तोमोमित्रस्यभागोसिवरुणस्याधिप
त्यन्दिवोवृष्टिर्वातस्पृतऽएकविꣳशस्तोमोवसूनाम्भागः ॥ २४ ॥
वसूनाम्भागोसिरुद्राणामाधिपत्यञ्चतुष्पात्स्पृतञ्चतुर्विꣳशस्तोमऽ
आदित्यानाम्भागोसिमरुतामाधिपत्यङ्गर्भास्पृताःपञ्चविꣳशस्तो
मोदित्यैभागोसिपूष्णऽआधिपत्यमोजस्पृतन्त्रिणवस्तोमोदेवस्य
सवितुर्भागोसिबृहस्पतेराधिपत्यꣳसमीचीर्दिशस्पृताश्चतुष्टोम

स्तोमोयवानाम्भागः ॥ २५ ॥ यवानाम्भागोस्ययवानामाधिपत्त्य
म्प्रजास्पृताश्चतुश्चत्त्वारिꣳशस्तोमऋभूणाम्भागोसिविश्वेषान्देवा
नामाधिपत्त्यम्भूतꣳस्पृतन्त्रयस्त्रिꣳशस्तोमःसहश्च ॥ २६ ॥
सहश्च । सहस्यश्चहैमन्तिकावृतूऽअग्नेरन्तःश्लेषोसिकल्पेता
न्द्यावापृथिवीकल्पन्तामापऽओषधयःकल्पन्तामग्नयःपृथङ्मम
ज्यैष्ठ्यायसव्रताः ॥ येऽअग्नयःसमनसोन्तराद्यावापृथिवीऽइमे ॥
हैमन्तिकावृतूऽअभिकल्पमानाऽइन्द्रमिवदेवाऽअभिसंविशन्तुतया
देवतयाङ्गिरस्वद्ध्रुवेसीदतम् ॥ २७ ॥ [ ४ ] एकयास्तुवत । प्र

जाऽअधीयन्तप्प्रजापतिरधिपतिरासीत्त्रिसृभिरस्तुवतब्रह्मासृज्ज्य
तुब्रह्मणस्प्पतिरधिपतिरासीत्त्पञ्चभिरस्तुवतभूतान्यसृज्ज्यन्तभू
तानाम्पतिरधिपतिरासीत्त्सप्तभिरस्तुवतसप्तऽऋषयोसृज्ज्यन्तधा
ताधिपतिरासीन्नवभिरस्तुवत ॥ २८ ॥ नवभिरस्तुवत । पितरोसृ
ज्ज्यन्तादितिरधिपत्त्न्यासीदेकादशभिरस्तुवतऽऋतवोसृज्ज्यन्ता
र्त्तवाऽअधिपतयऽआसँस्त्रयोदशभिरस्तुवतमासाऽअसृज्ज्यन्तसंव
त्त्सरोधिपतिरासीत्त्पञ्चदशभिरस्तुवतक्षत्त्रमसृज्ज्यतेन्द्रोधिपतिरा
सीत्त्सप्तदशभिरस्तुवतग्ग्राम्म्याःपशवोसृज्ज्यन्तबृहस्प्पतिरधिप

तिरासीन्नवदशभिरस्तुवत ॥ २९ ॥ नुवदशभिरस्तुवत । शूद्रा
र्य्यावसृज्ज्येतामहोरात्रेऽ अधिपत्नीऽआस्तामेकविꣳशत्यास्तुवते
कशफाःपुशवोऽसृज्ज्यन्तवरुणोधिपतिरासीत्त्रयोविꣳशत्यास्तुवतक्षु
द्राःपुशवोऽसृज्ज्यन्तपूषाधिपतिरासीत्पञ्चविꣳशत्यास्तुवतारण्याः
पुशवोऽसृज्ज्यन्तवायुरधिपतिरासीत्सप्तविꣳशत्यास्तुवतद्यावापृथि
वीव्यैतांवसवोरुद्राऽआदित्याऽअनुव्यायँस्तऽएवाधिपतयऽआसन्नव
विꣳशत्यास्तुवत ॥ ३० ॥ नवविꣳशत्यास्तुवतवनस्पतयोऽसृज्ज्यन्त
सोमोधिपतिरासीदेकत्रिꣳशतास्तुवतप्रजाऽअसृज्ज्यन्तयवाश्चा

यंश्चाधिपतयऽआसुँस्त्रयंस्त्रिꣳशतास्तुवतभूतान्यंशाम्म्यन्प्रजाप तिःपरमेष्ठ्यधिपतिरासील्लोकन्ताऽइन्द्रंम् ॥ ३१ ॥ [ ४ ] इतिश्री वाजसनेयसंहितायांचतुर्द्दशोऽध्यायः ॥ १४ ॥ श्रीवेदपुरुषायनमः ॥ अनुवाक्सूत्रम् अग्नेजातान् पञ्च रश्मिनासत्त्यायचतस्रः राज्ञ्यस्य यंपुरः पञ्चकौ अग्निर्मूर्द्धकोनात्रिꣳशत् येनऽऋषयोष्टौ तपश्चनव सप्त पञ्चषाष्टिः ॥ हरिःॐअग्नेजातान् ॥ अग्नेजातान्प्रणुदानःसुपत्त्नान्प्रत्त्यजातान्नुदजातवेदः ॥ अधिनोब्रूहिसुमनाऽअहेडँस्तवंस्यामशर्म्म

१ लोकम्पृण । २ ताअस्य । ३ इन्द्रंविश्वाः ।

म्म्मॉस्त्रिवरूथऽउद्धौ॥१॥सहसाजातान्॥सहसाजाताऽप्रणुदानःसुप
त्क्नाऽप्रत्त्यजाताञातवेदोनुदस्व ॥ अधिनोब्रूहिसुमनुस्यमानोव्वयᳬस्
स्यांमुप्प्रणुदानःसुपत्क्नान् ॥ २ ॥ षोडशीस्तोमं÷षोडशीस्तोमऽओ
जोद्द्रविणञ्चतुश्च्चत्त्वारिᳬशस्तोमोव्वर्च्चोद्द्रविणम् ॥ अग्ग्नेःपुरीषमुस्य
प्प्सुोनामुतान्त्वाव्विश्श्वेऽअभिगृणन्तुदेवाः ॥ स्तोमंपृष्ठाघृतवतीहसी
दप्प्रजावदुस्म्मेद्द्रविणायजस्व ॥ ३ ॥ एवुश्च्छन्दः ॥ एवुश्च्छन्दोव्व
रिवुश्च्छन्दः÷शुम्भुश्च्छन्दः÷परिभूश्च्छन्दऽआच्छच्छन्दोमनुश्च्छ
न्दोव्यचुश्च्छन्दःसिन्धुश्च्छन्दः÷समुद्द्रश्च्छन्दः÷सरिरञ्छन्दः÷ककु

प्च्छन्दस्त्रिककुप्छन्दः काव्यञ्छन्दोऽअङ्कुपञ्छन्दोक्षरपङ्क्तिश्छन्दः
पदपङ्क्तिश्छन्दो विष्टारपङ्क्तिश्छन्दः क्षुरो भ्रजश्छन्दऽआच्छच्छ
न्दः प्रच्छच्छन्दः ॥ ४ ॥ आच्छच्छन्दः प्रच्छच्छन्दः ॥ संयच्
छन्दो वियच्छन्दो बृहच्छन्दो रथन्तरञ्छन्दो निकायश्छन्दो विवध
श्छन्दो गिरश्छन्दो भ्रजश्छन्दः संस्तुप्छन्दो नुष्टुप्छन्दऽएव
श्छन्दो वरिवश्छन्दो वयश्छन्दो वयस्कृच्छन्दो विष्पर्धाश्छ
न्दो विशालञ्छन्दश्छदिश्छन्दो दूरोहणञ्छन्दस्तन्द्रञ्छन्दोऽअ
ङ्काङ्कञ्छन्दः ॥ ५ ॥ [ ५ ] रश्मिनासत्त्याय ॥ सत्त्यञ्जिन्वप्रेति

नुाधर्म्मंणुाधर्म्मंञ्जिन्वाद्दिवंत्त्यादुिवादिवंञ्जिन्वसुान्धिंनुांन्तारिंक्षेणा
न्तारिंक्षञ्जिन्वप्प्रातुिधिनांपृथिुव्यापृंथिवींञ्जिन्वविष्टुम्भेनुवृष्टत्त्यावृष्टिं
ञ्जिन्वप्प्रुवयाह्नाहांञ्जिन्वानुयाराञ्युारात्रींञ्जिन्वुांशिजावसुंभ्युांव
सुंञ्जिन्वप्प्रकुेतनांदिुत्त्येभ्यंऽआादुित्त्याञ्जिन्वुतन्तुंनारुायः ॥ ६ ॥
तन्तुंना ॥ तन्तुंनारुायस्प्पोषेंणरुायस्प्पोषंञ्जिन्वसर्ठसुप्पेंणंश्श्रु
तायंश्श्रुतञ्जिन्वैडेनौंषंधीभिुरोषंधीर्ञ्जिन्वोत्तुमेनंतुनूभिंस्तुनूर्ञ्जिन्व
वयोधसाधींतुेनाधींतञ्जिन्वाभिुजितुातेजंसुातेजोंजिन्व ॥ ७ ॥
प्रातिुपदांसि । प्प्रातिुपदेंत्त्वानुपदंस्यनुपदेंत्त्वासुम्पदांसिसुम्पदेंत्त्वा

तेजोंसितेजसेत्त्वात्रिवृदंसि ॥ ८ ॥ त्रिवृदंसि ॥ त्रिवृतेंत्त्वा
प्प्रवृदंसिप्प्रवृतेंत्त्वाविवृदंसिविवृतेंत्त्वासवृदंसि सवृतेंत्त्वाक्क्रमोस्या
क्क्रमायंत्त्वासङ्क्रमोसिसङ्क्रमायंत्त्वोत्क्रमोस्युत्क्रमायुत्त्वोत्क्क्रान्तिरस्यु
त्क्क्रान्त्यैत्त्वाधिपतिनोर्ज्जोर्ज्जञ्जिन्व ॥ ९ ॥ [ ४ ] राज्ञ्यंसि ॥
राज्ञ्यंसिप्प्राचीदिग्ग्वसंवस्तेदेवाऽअधिपतयोग्ग्निर्हेतीनाम्प्प्रतिधर्त्ता
त्रिवृत्त्वास्तोमः पृथिव्या ᳪ श्श्रयत्त्वाज्ज्यमुक्क्थमव्यंथायैस्तभ्नातु
रथन्तर ᳪ सामप्प्रतिष्ठित्त्याऽअन्तरिक्षऽऋषयस्त्वाप्प्रथमजादेवेषुदि
वोमात्त्रयावरिम्म्णाप्प्रथन्तुविधर्त्ताचायमधिपतिश्श्चतेत्त्वासर्व्वेसंविदा

नानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु॥१०॥विराडसि ॥ वि
राडसिदक्षिणादिग्रुद्रास्तेदेवाऽअधिपतयऽइन्द्रोहेतीनाम्प्रतिधर्त्तापञ्च
दशस्त्वास्तोमः पृथिव्याᳯश्रयतुप्रऽउगमुक्थमव्यथायैस्तभ्ना
तुबृहत्सामप्रतिष्ठित्याऽअन्तरिक्षऽऋषयस्त्वाप्रथमजादेवेषुदिवो
मात्रयावरिम्णाप्रथन्तुविधर्त्ताचायमधिपतिश्चतेत्वासर्वेसंविदाना
नाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादयन्तु ॥ ११ ॥ सम्राड
सि ॥ सम्राडसिप्रतीचीदिगादित्यास्तेदेवाऽअधिपतयोवरुणोहे
तीनाम्प्रतिधर्त्तासप्तदशस्त्वास्तोमः पृथिव्याᳯश्रयतुमरुत्वतीयमु

क्थमव्यथायैस्तभ्नातुवैरूपꣳसामप्रतिष्ठित्याऽअन्तरिक्षऽऋषय
स्त्वाप्रथमजादेवेषुदिवोमात्रयावरिम्णाप्रथन्तुविधर्त्ताचायमधि
पतिश्चतेत्वासर्वेसंविदानानाकस्यपृष्ठेस्वर्गेलोकेयजमानञ्चसादय
न्तु ॥ १२ ॥ स्वराडसि ॥ स्वराडस्युदीचीदिङ्मरुतस्तेदेवाऽ
अधिपतयःसोमोहेतीनाम्प्रतिधर्त्तैकविꣳशस्त्वास्तोमःपृथिव्याꣳ
श्रयतुनिष्केवल्यमुक्थमव्यथायैस्तभ्नातुवैराजꣳसामप्रतिष्ठित्या
ऽअन्तरिक्षऽऋषयस्त्वाप्रथमजादेवेषुदिवोमात्रयावरिम्णाप्रथ
न्तुविधर्त्ताचायमधिपतिश्चतेत्वासर्वेसंविदानानाकस्यपृष्ठेस्वर्गेलो

केयजमानञ्चसादयन्तु ॥ १३ ॥ अधिपत्त्न्यसि ॥ अधि
पत्त्न्यसिबृहतीदिग्विश्वेतेदेवाऽअधिपतयोबृहस्पतिर्हेतीनाम्प्र
तिधर्त्तात्रिणवत्रयस्त्रिꣳशौत्वास्तोमौपृथिव्याꣳश्रयतांवैश्वदेवा
ग्निमारुतेऽउक्थेऽअव्यथायैस्तभ्नीताꣳशाक्वररैवतेसामनीप्रतिष्ठि
त्याऽअन्तरिक्षऽऋषयस्त्वाप्रथमजादेवेषुदिवोमात्रयावरिम्णाप्र
थन्तुविधर्त्ताचायमधिपतिश्चतेत्वासर्वेसंविदानानाकस्यपृष्ठेस्वर्गे
लोकेयजमानञ्चसादयन्तु ॥ १४ ॥ [ ५ ] अयम्पुरः ॥ अयम्पुरो
हरिकेशःसूर्यरश्मिस्तस्यरथगृत्सश्चरथौजाश्चसेनानीग्राम

णण्यौ ॥ पुञ्जिकस्त्थुलाचंक्रतुस्त्थुलाचांप्सुरसौदुङ्क्ष्णवं÷पुशवोहे
तिःपौरुषेयोव्वुधः प्प्रहेतिस्त्तेब्भ्योनमोऽअस्त्तुतेनोवन्तुतेनोमृडयन्तु
तेयन्द्विष्म्मोयश्च्चनोद्द्वेष्टितमेषाञ्जम्भेदध्मः ॥१५॥ अयन्दक्षिणा ॥
अयन्दक्षिणाव्विश्श्वकर्म्मातस्यरथस्वनश्च्चरथेचित्रश्च्चसेनानीग्ग्रामु
णण्यौ ॥ मेनकाचसहजन्न्याचाप्सुरसौयातुधानाहेतीरक्षांसि
प्प्रहेतिस्त्तेब्भ्योनमोऽअस्त्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्च्च
नोद्द्वेष्टितमेषाञ्जम्भेदध्मः ॥ १६ ॥ अयम्पश्च्चात् ॥ अयम्पश्च्चा
द्विश्श्वव्यचास्त्तस्यरथप्प्रोतश्च्चसमरथश्च्चसेनानीग्ग्रामुण्यौ ॥ प्र



म्म्लोचन्तीचानुम्म्लोचन्तीचाप्प्सुरसौब्याग्ग्राहेतिःसुप्पाः प्प्रहेतिस्त्तेब्भ्योनमोऽअस्त्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदद्ध्मः ॥ १७ ॥ अयमंत्तुरात ॥ अयमुत्तरात्सँयद्द्वसुस्तस्युताक्ष्यश्चारिष्टनेमिश्चसेनानीग्ग्रामुण्यौ ॥ व्विश्वाचीचघृताचीचाप्प्सरसावापोहेतिर्व्वातःप्प्रहेतिस्त्तेब्भ्योनमोऽअस्त्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्म्मोयश्चनोद्वेष्टितमेषाञ्जम्भेदद्ध्मः ॥१८॥ अयमुपरि ॥ अयमुपर्य्यर्व्वाग्ग्वसुस्तस्यसेनजिच्चसुषेणश्चसेनानीग्ग्रामुण्यौ ॥ उर्व्वशीचपूर्व्वचित्तिश्चाप्प्सुरसावबस्फूर्ज्जन्हेतिर्व्विद्युत्प्प्रहेति



स्तेभ्योनमोऽअस्तुतेनोवन्तुतेनोमृडयन्तुतेयन्द्विष्मोयश्चनोद्वेष्टि
तमेषाञ्जम्भेदध्मः ॥१९॥ [५]अग्निर्मूर्द्धा॥अग्निर्मूर्द्धादिवःककु
त्पतिःपृथिव्याऽअयम् ॥ अपाᳬरेताᳬसिजिन्वति ॥२०॥ अयम
ग्निः ॥ अयमग्निः सहस्रिणोवाजस्यशतिनस्पतिः ॥ मूर्द्धाकवीर
यीणाम् ॥ २१ ॥ त्वामग्ने ॥ त्वामग्नेपुष्करादध्यथर्वानिरमन्थत॥
मूर्ध्नोविश्वस्यवाघतः ॥२२ ॥ भुवोयज्ञस्य ॥ भुवोयज्ञस्यरजसश्च
नेतायत्रानियुद्भिःसचसेशिवाभिः ॥ दिविमूर्द्धानन्दधिषेस्वर्षाञ्जिह्वा
मग्नेचकृषेहव्यवाहम् ॥२३॥ अबोध्यग्निः ॥ अबोध्यग्निः समि

धाजनानांम्प्रतिंधेनुमिवायतीमुषासम् ॥ युह्वाऽइवप्प्रवयामुज्जिहा
नाःप्प्रभानवःसिस्रतेनाकमच्छ ॥ २४ ॥ अवोचामकवये ॥ अवोचा
मकवयेमेद्ध्यायवचोवन्दारुंवृषभायवृष्णे ॥ गविष्ठिरोनमसास्तो
मंमग्नौदिवीवरुक्कममुरुव्यञ्चमश्रेत् ॥ २५ ॥ अयमिह ॥ अयमिह
प्प्रथमोधायिधातृभिर्होतायजिष्ठोऽअद्ध्वरेष्वीड्यः ॥ यमप्नवानोभृ
गवोविरुरुचुर्वनेषुचित्रंविभ्वंविशेविशे ॥ २६ ॥ जनस्यगोपाः ॥ जनं
स्यगोपाऽअंजनिष्टजागृविरग्निःसुदक्षःसुवितायनव्यसे ॥ घृतप्प्रती
कोवृहतादिविस्पृशाद्युमद्विभातिभरतेभ्यःशुचिः ॥ २७ ॥ त्वामग्ने ॥

त्वामग्नेऽअङ्गिरसोगहाहितमन्वविन्दञ्छिश्रियाणंवनेवने ॥ सजायसेमथ्यमानुःसहोमहत्त्वामाहुःसहसस्पुत्रमङ्गिरः ॥२८॥ सखायःसम्यञ्चमिषंस्तोमञ्चाग्नये ॥ वर्षिष्ठायक्षितीनामूर्जोनप्त्रेसहस्वते ॥२९॥ संसमित् ॥ संसमिद्युवसेवृषन्नग्नेविश्वान्यर्यऽआ ॥ इडस्पदेसमिध्यसेसनोवसून्याभर ॥ ३० ॥ त्वाञ्चित्रश्रवस्तम ॥ त्वाञ्चित्रश्रवस्तमहवन्तेविक्षुजन्तवः ॥ शोचिष्केशम्पुरुप्रियाग्नेहव्यायवोढवे ॥३१॥ एनावः ॥ एनावोऽअग्निन्नमसोर्जोनपातमाहुवे ॥ प्रियञ्चेतिष्ठमरतिंस्वध्वरंविश्वस्यदूतममृतम् ॥

॥ ३२ ॥ व्विश्वंस्यदूतम् ॥ विश्वंस्यदूतममृतंव्विश्वंस्यदूतममृतम् ॥
सयोजतेऽअरुषाव्विश्वभोजसासदुद्रवत्स्वाऽहुतः ॥ ३३ ॥ सदुद्रवत् ॥
सदुद्रवत्स्वाऽहुतःसदुद्रवत्स्वाहुतः ॥ सुब्रह्मायज्ञःसुशमीव्वसूनान्दे
वंश्राधोजनानाम् ॥ ३४ ॥ अग्नेव्वाजस्य ॥ अग्नेव्वाजस्यगोमतऽ
ईशानःसहसोयहो ॥ अस्मेधेहिजातवेदोमहिश्रवः ॥ ३५ ॥ सऽ
इधानः ॥ सऽइधानोव्वसुष्कविरग्निरीडेन्योगिरा ॥ रेवदस्मभ्यं
म्पुर्वणीकदीदिहि ॥ ३६ ॥ क्षपोराजन् ॥ क्षपोराजन्नुतत्त्मनाग्नेव
स्तोरुतोषसः ॥ सतिग्मजम्भरक्षसोदहप्राति ॥ ३७ ॥ भद्रोनः ॥
२०

भुद्रोनोऽअग्निराहुतोभुद्रारातिःसुभगभुद्रोऽअध्वुरः ॥ भुद्राऽउतप्प्र
शंस्तयः ॥३८॥ भुद्राऽउत ॥ भुद्राऽउतप्प्रशंस्तयोभुद्रम्मनंःकृणुष्ष्व
वृत्रतूर्य्यै ॥ येनासुमत्त्सुसासहंः ॥ ३९ ॥ येनासुमत्त्सु । सासहोव
स्स्थिरातनुहिभूरिशर्द्धताम् ॥ वुनेमातेऽअभिष्टिभिः॥४०॥अुग्निन्त
म् ॥ अुग्निन्तम्मंन्न्येयोवसुरस्तुंय्यंय्यन्तिधेनवंः ॥ अस्तुमर्वन्तऽआ
शवोस्तुन्नित्त्यासोवाजिनुऽइषंस्स्तोतृब्भ्युऽआभंर ॥ ४१ ॥ सोऽअ
ग्निः ॥ सोऽअग्निर्य्योवसुग्गृणेसंय्यमायन्तिधेनवंः ॥ समर्वन्तोरघुद्रु
वःसःसुजातासंःसूरयुऽइषंस्स्तोतृब्भ्युऽआभर ॥ ४२॥ उभेसुंश्च

